परिस्फुरदपि नातदेव ततः स्वरूपस्यातत्तया प्रथनेऽपि न काचिद् ग्राह्यलक्षणक्षतिरिति चेत् यद्यतत्तापि विस्फुरन्ती स्वरूपमेवास्य स्यात् स्यादप्यस्योपन्यासस्य प्रस्तुतोपयोगः । अस्वरूपस्य कथं प्रकाश इति यद्यपि तथा वक्ष्यामः तथाप्यतत्ता कथं तस्य स्वरूपमितीतोऽपि दीयतां दृष्टिः । कथास्वरूपस्फुरणे दोषः नायं भिन्नयोर्वेद्य वेदकभावो व्यापारनिबन्धनो नियतस्य तस्याभावात् । नापि जाति निबन्धनः कश्चित् ज्ञेय इति व्यवस्थानुपपत्तिप्रसङ्गात् । नहि निसर्गसिद्धानां गोत्वादीनामीदृशी रीतिरिति चेत् नन्वयमभेदेऽपि दोषस्तदवस्थ एव । तथा हि स्वस्य वेदनमिति नायं व्यापारनिबन्धनो व्यवहारः स्वात्मनि तदभावात् । नापि जातिनिबन्धनः साधारण्य प्रसङ्गात् । नहि जात्यैव गौः स्वात्मानं प्रति न तु परं प्रतीति नियमो दृष्टः । नच ज्ञानं स्वस्येव परस्यापि वेदनं सर्व्वसर्व्वज्ञत्वापत्तेः । न तत् कस्यचित् किन्तु वेदनमात्रमिति चेत् तथापि स्वात्मन्यजड़वत् परत्राप्यजड़ं स्यात् परस्मिन्नन्धवत् स्वस्मिन्नप्यन्धं प्रसज्येत जात्यैव तद्रूपत्वात् । कारणापि स्वकारणात् कश्चिन्नियत रूप एव तदुत्पन्नमिति चेत् । नैवमुच्चैर्ब्रूयाः परैरपि कदाचिदेवं श्रूयेत । अभेदोऽस्तु मा वा भेदस्तु प्रकाशमानत्वेन व्यासेधाम इति चेन्न वस्तुनि भेदनिवृत्तेरेवाभेदरूपत्वात् ।

अस्तु तर्हि भेदाभेदविधुरमेव चित्तं चेतोभेदे प्रकाशस्यायोगात् अभेदे चित्रत्वानुपपत्तेरिति चेन्न मिथोविरुद्धविधिद्वयविधिवत् तदुभयनिषेधस्याप्येकत्र विरुद्धत्वात् । नच सोऽप्यस्त्विति वाच्यं स्याद्वादावतारे तथापि दिगम्बरत्वप्रसङ्गात् । अस्तु तर्हि चतुःशिखरीशून्यमेव चित्तं तात्त्विकरूपत्वात् । एकानेकत्वविरहेऽपि सत्त्वमिथ्यात्वयोर्द्वयोर्हि विप्रतिषिद्ध इति चेत् । अथ चतुःशिखरशेखरमेव किन्न स्यात् सर्व्वरूपतायुक्तेस्तुल्यत्वात् । एकैकपक्षानुपपत्तिश्च यथा तन्निषेधपर्य्यवसायिनी तथा तद्विधिपर्य्यवसायिन्यपीति ।

मिति चेत् आमुष्मिकमपि प्रत्यक्षमेव तुल्ययुक्तत्वात् । अत्रभेदेन तत्र न प्रवृत्तिरिति चेत् तथापि किं विचारेण तमन्तरेणापि तस्याः सुलभत्वात् । तामेवायं मुष्णातीति चेत् अविशेषादिहापि मुष्णीयादिति । सोऽयं पवनतनयचरितमनुसृत्य तत्स्वर्गस्था बालधानरः कियदपि दूरमुत्प्लुत्य महार्णवे पतितः प्राह अपारत्वादयमकूपारो मिथ्या रामायणमिति तत् किमनेन शक्यं ज्ञातुं निर्व्वोढुं वा न शक्यते । कीदृशं जगदित्येतावन्मात्रमपि मानसदृशावच्छिन्नतमेव । नच निष्फलत्वेऽपि अज्ञेयमिदं तावत् परामर्शपाटवाभावेनाप्युपपत्तेः । नहि जात्यन्धैरालोकं ज्ञातुं निर्व्वोढुं वा न शक्यमित्यश्रेय-निर्व्वाच्यमेव तल्लोकइति ।

अस्तु तर्हि शून्यतैव परमं निर्व्वाणमिति चेन्न साहि यद्यसिद्धा कथं सदवप्रेयमपि विश्वमभिधीयते चाकाशस्य सर्व्वत्र सुलभत्वात् परतश्चेत् सिद्धा परोऽप्युपगन्तव्यो ग्राहकस्तस्याप्यावर्ज्जनीयमिति । सच परो यदि संवृतिरेव विश्वशून्यतयोर्न कश्चिद्विशेषः कथं तदप्यवशिष्येत । असंवृतिरूपश्चेत् परः परतएव सिद्धा वस्तुवत्ता स्वयमसिद्धश्चेत् कथं शून्यत्वमपि साधयेत् स्वतःसिद्धश्चेत् आयातोऽसि मार्गेण । तथाहि स्वतः सिद्धतया संवेदनरूपं शून्यत्वादेव च न तस्य कालावच्छेद इति नित्यम् । अतएव न देशावच्छेदइति व्यापकम् अतएव तन्निर्धर्म्मकमिति विचारासहं तस्य धर्म्मधर्म्मिभावमुपादाय प्रवृत्तेः । अतएव विशेषाभावरूपमद्वैतं प्रपञ्चस्यापारमार्थिकत्वाच्च निष्प्रतियोगिकमिति विधिरूपम् अविचारितप्रपञ्चापेक्षया तु शून्यमिति व्यवहारः । तथापि प्रपञ्चशून्यस्यानुभवमात्रस्य प्रपञ्चेन कः सम्बन्धः । नच नायं प्रकाशयतइति चेत् वस्तुगत्या न कश्चित् संवृत्या तु गगनगन्धर्व्वनगरयोराधाराधेयभाववत् विषयविषयिभावः सच यथा नैयायिकैः समर्थयिष्यते तथैव वेद्यनिष्ठत्वस्वतावच्छिन्न दर्शनइति विशेषः । अविद्यैव हि तथा तथा विवर्त्तते यथा यथा-

नुभाव्यतया व्यवह्रियते तत्तत्कार्य्योपनीतोपाधिभेदाच्चानुभूतिरपि भिन्नेव व्यवहारपथमवतरति गगनमिव स्वप्रदेशघटकटाहकोटर कुटीकोटिभिः । तदास्तां तावत् किमात्मकव्यवच्छिन्नचिन्तयेति तस्मादनुभवव्यवस्थितेः अनात्मापि परिस्फुरतीत्यवश्यंमीयमेतत् । तत्सिद्धौ तल्लक्षणमपि सिद्धिदमेव । तच्च बाह्याविरोधे ज्ञाना-नित्यतायां तन्निष्ठमुभयनिष्ठं वा बाह्यविरोधे ज्ञाननिष्ठमेव तन्नित्य-तायां ग्राह्यनिष्ठमेवेति । तथाहि स्वच्छन्दावदत्र विषयविषयि भावः स च प्रकाशस्य सतस्तदीयताभावरूपः स्वभावविशेषः । स्वभाव त्वादेव च नोपकारान्तरमपेक्षते तन्मात्रीयत्वादेव च नान्यदीयः । किमस्य फलमिति प्रश्नप्रसङ्गेऽपि वह्निवद्धूमोत्तरव्यवहारप्रवृत्ति-रुत्तरमपि तेन ज्ञाननिरूपणम् । कुतोऽयमीदृगित्यनुयोगेऽपि सामग्रीसन्निवेशोत्तरं कार्य्यकारणवत् अन्यथा तत्राप्युपकारान्तरा-पेक्षायामनवस्था तदनपेक्षायां वा साधारण्यं केन चार्थं तेन तदेव क्रियते अनेनाप्यं तदेव विषयीक्रियत इति विवेचनीयं । विषयीक्रियते इति कोऽर्थः क्रियत इत्यपि कोऽर्थः इत्यपि विचारणीयं कार्य्योत्पादन मेव करणं तदीयतोत्पत्तिरेव विषयीकरणमिति विवेचनीयम् । उप कारस्तु यथाच विज्ञानस्वरूपातिरिक्तो नास्ति तथा तत्रापि कार्य्यं स्वरूपातिरिक्तो नास्तीति प्रतिसन्धेयमिति । अतएव कार्य्यकारण भावोऽप्युपेक्षितव्य इति तु महत् साहसं तथा सति हि स्यादेव न स्यादेवेत्याद्यापद्येत । तथा च प्रकाशत्वमसोऽन्यतरस्य कौटस्थ्य प्रसङ्गः । सान्वृतोऽस्त्विति चेत् विषयविषयिभावोऽप्येवमस्तु यदि विषयकार्य्ययोर्बलवतीबाधेति दर्शीगतिः । तदत्र तत्त्वं न तावदुभय निष्ठं सत्त्वं सतोऽसतो वास्थिरस्यापि स्फुरणात् नच ज्ञाननित्य तायां पारमार्थिकग्राह्यनिष्ठं सत् कार्य्यवादस्यास्तु सांख्यप्रक्रिया विध्वंसात् । न खलु पूर्व्वपूर्व्वतिरोभावाविर्भावावन्तरेण विचारस्या-प्यवसरः । नाप्यलीकग्राह्यतायां क्षणिकज्ञाननिष्ठम् इति तुच्छस्य

विशेषाभावात् ज्ञानस्य निराकारत्वात् । अन्यथाप्यनिर्द्धारितारोप-यितुमशक्यत्वात् । असन्तस्तर्हि विशेषा आभासन्तीति चेन्न असन्त इति तुच्छात्मानो असद्रूपा इति वा अकिञ्चिद्रूपा इति वा नियत व्यावृत्तिमात्ररूपा इति वा प्रथमे आश्रयदेशान्तरयोः सत्वप्रसङ्गः द्वितीये त्वविशेषकता तृतीये नीलस्यालीकस्यानीलव्यावृत्तिरूपतया अनीलानां पारमार्थिकत्वप्रसङ्गः तेषामलीकत्वे तद्व्यावृत्त्यात्मनो नीलस्यानलीकत्वापत्तिः तथाप्यलीकत्वे अविशेषत्वं तेनरूपेणावि-शेषत्वमिति चेत् । अथ विशेषः केन नीलपीतादिनेति चेत् तत् किं ततोऽधिकम् अनलीकं तर्हि स्यात् अनधिकञ्चेत् कुतस्तेनापीति वासनावशाद्विशेषाः स्फुरन्तीति चेत् स्फुरन्तु कः कारणे विप्रति-पद्यते ते तु नीलादयो यत्किञ्चिद्रूपाः कथं विशेषाः तदितररूपेण किञ्चिद्रूपत्वे तेन रूपेण किञ्चिद्रूपास्त्वेति ब्रूमः । विचारासहता मात्रमलीकत्वमिति चेत् तथापि भावपरिवर्त्तमात्रं विचारासह-तायाः किञ्चिद्रूपत्वविरोधित्वात् अविरोधे वा त्वद्विचारसहता अपि किञ्चिद्रूपाश्च नीलादय इति विचारस्य दुर्विचारत्वप्रसङ्गात् तेन नीलादीनां कायामात्रस्याप्यनाक्रान्तेः प्रविश्य वा अनिर्वचनीय-ख्यातिकुक्षिं तिष्ठ वा नतिकर्दममपहाय न्यायनयानुसारेण नीला-दीनां पारमार्थिकत्वे तस्मात्

न ग्राह्यभेदमवधूय धियोऽस्ति वृत्तिस्तद्बाधने बलिनि वेदनयेऽजयश्रीः ।
नो चेदनिन्द्यमिदमीदृशमेव विश्वं तथ्यं तथागतमतस्य तु कोऽवकाशः ॥

तस्मादलीकं विचारासहमनिर्वचनीयं वा यमाश्रित्य जगन्निन्दी-यते स एव विचारस्थिन्त्यतां कोऽसौ कीदृशश्चेति । सर्वं प्रमाणमेव वाक्यारूढमिति चेत् तर्हि विचारासहं किं तेन भीतविचारकस्येव तथाहि केनचिज्जीर्तेन राजद्वारि दिरदमालोक्य विकल्पितं किमयमन्ध कारो मूलवान् आहो स्विदजगदारोवत्रराजान वर्षति गर्जति च । यदा नान्धकारोऽयं राजद्वारे श्मशाने च यस्तिष्ठति स बान्धव इति पर-

अन्यथा तु तदाभासो यथायं धूमेनाग्निसाधकः सर्व्वथानुपलभ्यमानोपाधिशङ्काग्रस्तत्वात् प्रमेयत्वात् विरुद्धत्वाच्चेति। इतरदपि प्रमाणमनुमानव्याश्रयमेव विचाराङ्गं तर्कमनन्यथासिद्धिञ्च पुरस्कृत्य प्रवृत्तेः ततस्तन्यायेनैव रीतिरनुगन्तव्येति।

एवं व्यवस्थिते लोकव्यवहारे साधनोपक्रमेण यदि विचारयसि प्रतिज्ञैव तावदङ्गं धारयति। तथाहि न किञ्चिदस्ति न किञ्चित् सत्यं न किञ्चित् कारकं न किञ्चित् विचारसहं न किञ्चित् साधनं न किञ्चिद्दर्शनं न कश्चित् सिद्धान्त इत्यादिः स्वार्थप्रतिक्षेप व्यवहारः। प्रतिज्ञापि हि न स्यात् न सत्या न कारिका न विचारसहा तदभिधानमपि न साधनं तत् फलमपि न दर्शनं तदर्थोऽपि न सिद्धान्त इत्यापद्येत। इष्यत एवेदमिति चेन्न इच्छामात्रेण व्याघातानिवृत्तेः। यदि हि न ज्ञातं किञ्चिदस्तीत्यादिप्रतिज्ञार्थः प्रतिज्ञां स्पृशेत् कथमयमर्थः प्रत्येतव्यः भवेत् कथं सानुपपन्ना तदुपपन्नत्वे च कथं पुनः प्रतिज्ञार्थ उपपद्यते। तदिदमायातं स्वविषमूर्च्छिता भुजङ्गी आत्मानमेव दशतीति। तदतदिति विशेषणादयमदोष इति चेत् तद्विचारो वा स्यात् लोकमर्य्यादातिक्रमो वा। प्रथमः पूर्व्वमेव निरस्तः तस्य प्रतिज्ञाकल्पतया कुसीदस्येव स्वप्रसूतवृद्धिग्रासपत्येनैव प्रतिहतत्वात् द्वितीये तु स्वच्छायातिक्रमवत् स एव व्याघातः। यदि हि लोकमर्य्यादातिक्रमो न विचारस्वरूपस्थितिः तत्स्वरूपास्थितिश्चेन्न तदतिक्रम इत्यर्थः प्रतिषेध्यसिद्धत्र सिद्धिव्याघातश्च। यदि हि प्रतिषेध्यं सिद्धं नात्यन्ताय प्रतिषेधः न चेन्नतराम्। लोकव्यवहारसिद्धमिति चेत् सिद्धमेव हि तर्हि नह्यन्यतोऽपि किञ्चित् सिध्यति। नायमबाध्यो व्यवहार इति चेत् यदि नैकत्र अन्यत्रापि तथाभावप्रसङ्गात् सर्वं बाध्यत इति चेत् तदपेक्ष सिद्धिना व्यवहारेणानपेक्षेण वा अव्यवहारेणैव वेति यस्तावत्तदपेक्षसिद्धिः स कथं तमेव बाधेत नह्यनुमानानुमानेनोपात्तग्राहिप्रत्यक्ष

बाधे बोधे द्वितीयक्षणस्थायी न हि निषेधकं प्रमाणं निषेध्यसिद्धिनिरपेक्षं भवितुमर्हति तृतीये तु तद्विपरीतापत्तिः विचारबाध्यत्वमुपक्रम्याविचारबाध्यत्वेन संहारात् । कथञ्चिदपि निरूढं च स्वतःसिद्धं बाध्यं वा स्यात् अनिर्वचनीयं वा आद्ये विरोधोऽसिद्धिश्च द्वितीये स्वोपाख्यातिक्रमः पदानिरूप्यत्वादनिर्वचनीयबाधप्रसङ्गश्चेति एतेन हेतवो निरस्ताः ते हि ज्ञेयत्वात् ज्ञानत्वात् असत्त्वात् विकल्पानुपपत्तेः प्रत्ययत्वात् कर्म्मानुपपत्तेः मिथोव्याघातादित्यादयः एते हि सर्व्व एव स्वार्थक्रियाप्रतिक्षेपिकां युक्तिमाक्षिपन्ति निषेध्यसिद्ध्यापेक्षत्वे अनैकान्तिकौ च प्रथमद्वितीयौ स्वपक्षएव व्यभिचारात् असिद्धौ तृतीयचतुर्थौ अनैकान्तिकश्च पञ्चमः पूर्ववत् असिद्धो व्याघातेनानैकान्तिकश्च षष्ठः असिद्धो अनैकान्तिकश्च सप्तमः सर्व्वएव बाधाद्यपदिष्टाइति ।

एतेन दृष्टान्ता अपि निरस्तनीयाः ते हि रज्जुसर्पवत् तज्ज्ञानवत् प्रमविषाक्तवत् दर्पणमुखवत् स्वप्नप्रत्ययवत् छेद्यानुपपत्तौ छिदावत् मिथः शोषकनिर्वापकानलजलवदित्यादयः । येन च तत्र सर्पस्यासत्त्वं तज्ज्ञानस्य मिथ्यात्वं प्रमविषस्याकारकत्वं दर्पणमुखस्य विचारासहत्वं स्वप्नज्ञानस्य निरालम्बनत्वं छेद्यानुपपत्तौ छिदानुपपत्तिश्चावधारितानि तेनैव तत्र रज्जोः सत्त्वं असर्पज्ञानस्य सत्यत्वं प्रमस्यान्यत्र गदादेर्विषाद एव कारकत्वं दर्पणस्य विचारसहत्वम् अस्वप्नज्ञानस्य सालम्बनत्वं छेद्यनिष्ठा छिदा सिद्धा ज्ञानकर्म्म चोपपादितानि तदनुपपत्तौ वा साध्यविकलतया सर्व्वएवैते दृष्टान्ताभासाः अन्तिमस्तु साधनविकलः सिद्धान्तानां व्याघातः परस्परविरुद्धरूपत्वलक्षणः जलानलयोस्तु वध्यघातकभावलक्षणः न च शब्दसाम्येनानुमानमित्येषा दिक् ।

अस्तु तर्हि दूषणोपक्रमेण विचारइति चेत् तत्रापि पक्षाभासः कीदृशोऽस्त्वसिद्धिरिति नेदं स्फूर्त्तं विरुद्धधर्म्मासंसर्गप्रसङ्गात् नास्फूर्त्तं

तथा प्रतिभासप्रसङ्गात् न परानपेक्षं सदसद्व्यतिरेकप्रसङ्गात्
नैकं तथा प्रतिभासप्रसङ्गात् । नानेकं भेदव्यवस्थितिप्रसङ्गात्
नच व्यापकं निष्क्रियत्वप्रसङ्गात् नाव्यापकं अविधेयत्वप्रसङ्गादि-
त्यादिरिति चेन्न मिथोविरोधनूसंप्रतिक्षेपकापादनानुकूलत्वविपर्य्य-
यापर्य्यवसानैकत्वाभासत्वात् । यथा हि नायं प्रध्वंसो निरवधिः
निर्मूलत्वप्रसङ्गात् नाप्यवधिमान् तथोपलब्धिप्रसङ्गात् इत्यनयोरेव
व्याभासः परस्परप्रतिक्षेपकयोरुभयोरत्याभासत्वानुपपत्तेः । तथा-
त्रापि कष्ठस्थूलादिनिषेधादन्यः स्थूलादिविधिः तन्निषेधादन्योऽ-
स्थूलादिविधिरिति । स्थितिश्चमूलाश्चेते प्रतिबन्धस्यासिद्धेः सिद्धौ
वा व्याप्यव्यापकतदधिकरणानां सिद्धौ विवादनिवृत्तेः इष्टापादनञ्च
प्रथमे अनुभूतावस्थिते स्थूले विरुद्धधर्म्मासंसर्गस्योक्तत्वात् तथा च
वक्ष्यामः । अनुकूलश्च द्वितीयः अस्थूलाप्रतिक्षेपस्य स्थूलोप-
लम्भानुग्राहकत्वात् तद्रूपतायां व्यवहारस्य तथा प्रतिभासव्याप्तत्वाच्च
एवं तृतीयोऽपि अनपेक्षत्वप्रतिक्षेपस्य सापेक्षत्वोपलम्भानुग्राहक-
त्वात् अपेक्षत्वविधेः सदातनत्वव्याप्तत्वाच्च । चतुर्थं स्वप्रसिद्धव्यापकः
सदसत्वस्य विरोधेनैकत्र विधिवत् निषेधस्याप्यनुपपत्तेः । पञ्चमस्तु
अनुकूल एव अनेकत्वाभिमते वस्तुन्येकताप्रतिक्षेपस्यानेकतोपलम्भो-
पलम्भकत्वात् तद्रूपव्यवहारस्य तथा प्रतिभासव्याप्तत्वाच्चेति सङ्क-
क्षिप्तः एवास्माकम् । ननु भेदः स्वरूपं वा स्यात् इतरेतराभावो
वा धर्म्मान्तरं वा । न पूर्व्वः घटोभिन्न इतिसहप्रयोगानुपपत्तेः ।
नापरः प्रतीतावात्माश्रयप्रसङ्गात् भिन्नप्रतियोगि निरूपणाद्धि तद-
भावो निरूप्य तन्निरूपणञ्चेव च भेदनिरूपणं बोतकः अनवस्था
प्रसङ्गात् । तत् कथमसौ भवतु इत्यताशिति चेत् तत् किं भेद
ज्ञानमेव नास्ति तदपि वा नित्यं अनित्यमपि वा निर्हेतुकं सहेतुक
मपि वा निर्व्विषयकं सविषयकमपि वा बाधकनामविलासकमिति ।
तत्र प्रथमः सर्व्वतो विरोधादनुत्तरः द्वितीयः सुकृतकस्यानुरोधादु-

येऽग्रीयः तृतीयोऽपि विरोधाद्धेयः, चतुर्थस्तु भेदोल्लेखादेव त्याज्यः पञ्चमस्तु चिन्त्यते किमेतेष्वन्यतमात्मा अस्य विषयः उत चेवेति तत्र यद्यन्य एव किमेताभिरधिकरणानुपपत्तिभिस्तस्य बाध्येत एवं हि चौरापराधेन ब्राह्मणस्य माण्डव्यनिग्रहः स्यात्। अथान्यतमात्मा तथापि यदि धर्म्मान्तरमेवेति सत्यं तदानवस्थाभिया तदधिकएव प्रवाहः स्वीक्रियतां तस्य कुतस्त्यागः नह्यनवस्था प्रतिभासमानमर्थं निवर्त्तयति किन्तु प्रवाहं परिहापयति गन्धे गन्धान्तरवत्। अथेतरेतराभावमेव भेदज्ञानमवलम्बत इति सत्यं तत्रापि ह्यात्माश्रयः तेन हि भेदज्ञानमेव न स्यात्। अस्ति च तत् ततो हेत्वन्तरमाक्षिपेत् ननु स्वात्मनि स्वयमहेतुत्वे स्वयमेव निवर्त्तते अविद्यावशादिति चेत् किमायातः नह्य विरोधेऽप्यात्माश्रयनिवृत्तिः तथासति घटादयोऽपि कुलालादिनिरपेक्षाः स्वयमेव भवेयुः। अथात्माश्रयदोषोपहततया तत्र स्वस्यैव कारणं ततो यतः कुतश्चित् तस्य जन्म तच्च दुर्निरूपमतो ऽविद्योत्थमत इति विचारार्थः। नास्ति तर्हि विवादः न च तदपि दुर्निरूपं प्रतियोगिरूपत्वेनाप्रतीतावधिकरणाप्रतीतिरधिकरणस्वभावत्वेनास्मृतौ प्रतियोगिस्मृतिर्हीतरेतराभावप्रत्ययकारणमिति निरूपणात्। अथ स्वरूपमेव भेदप्रतिभासस्य विषय इति सत्यं तथापि सहप्रयोग एवानुपपन्नः स्वव्यक्ता भेदेन तु किमपराद्धं सोऽपि ह्यस्त इति चेत् सत्यं नैमित्तिकस्तु स्यात् ननु स्वरूपतः नहि घटनामय घटस्वरूपत्वेत्यादौ भेदपदमपि प्रेक्षावानुपादत्ते व्याख्यायान्तु मूढप्रबोधनाय घटः कुम्भ इतिवत् सहप्रयोगेऽपि न दोषः तथापि कः परमार्थः यथार्थं चयमपि घटस्य हि घटात्मना प्रतीतिरघटात्मना च प्रतीतिस्ततो वैशिष्ट्यप्रतीतिरित्यनुभवसिद्धं तथाभावस्य प्रथमभावं अभावान्तरधर्म्मान्तरयोरभावात् सामान्यादिषु त्रिषु स्वयं धर्म्मान्तराभावात् प्रध्वादिषु त्रिषु स्वयं भावस्यापि सम्भवात्। भवति घटोऽयं न पटस्तन्तुमयस्येति गन्धोऽयं न रूपं सुरभिश्चेति गतिरियं

अन्ययोरवयवयोः विभागात् संयोगनाशे द्रव्यनाशः स्यादिति चेत् ततः किं अपसिद्धान्त इति चेन्न एवमपि क्वचिदभ्युपगमात् सर्व्वत्रैवं प्रसङ्ग इति चेत् तथाप्यवयविनः किमत्याहितम् । नन्वेवमपि कर्म्मणो द्रव्यारम्भकसंयोगप्रतिद्वन्द्विविभागजनननियमानभ्युपगमात् आरम्भविशेषात् कस्यचिदेव कर्म्मणस्तथाभूतविशेषवत्त्वैः । एतेन पाणौ चलति तन्मूलभूतः परमाणुरपि चलेत् ततो ऽचलद्भुजपरमाणोर्विभागः ततो यो येन संयुज्यते विभज्यते वा स तत्कार्य्यद्रव्येणापीति न्यायेन भुजपाण्योरपि विभागः ततः संयोगनाशः ततः शरीरनाश इति निरस्तम् । नहि पाणिपरमाणुक्रिया भुजपरमाणुविभागमारभते नियमेन तदनारम्भकत्वे कर्म्मणश्चलत्यतिरिक्ते किन्त्वाकाशादिदेशे एवमपि सर्व्वत्रैव प्रसज्येत विभागिभ्यामाकाशादिदेशाभ्यां न संयुज्येतेति चेन्न अवयवसंयोगविभागाभ्यामेव तत्सिद्धेः । एतच्च सम्प्रतिबोधदार्ढ्यायाधिकमनुसन्धेयं तर्हि चलदवयवी चलतीति चेत् नेदमपि पाणौ कम्पमाने शरीरं न कम्पत इति प्रत्ययात् । अथवा यो यदाश्रिततयोपलभ्यते स तस्मिंश्चलत्यचलोऽपि चलन्निव विभाव्यते दर्पणमुखवत् जलचन्द्रवच्चेति द्रष्टव्यम् । एवं प्रतीतिरुपपत्त्यनया चलत्यवयवे सर्व्वत्र तथैवेति न किञ्चिदनुपपन्नं न चलेत्तु कथं तथोपलभ्यतां तथापि चलाचलात्मकस्य चलाचलतया प्रतीतौ चलाचलकम्पचन्द्रवत् द्वैतप्रत्ययोऽपि स्यादिति चेत् स्यादपि यद्याश्रयविच्छेदः स्यात् नह्येकस्मिन्नेव जले ऽविच्छिन्नावयवभेदेन द्विचन्द्रभ्रमो नाम किन्तु तरङ्गवेगस्थले जल उपलभ्यतेऽचले तत्रेति चेत्तु सोऽपि सन्तानभिन्न इति चेत् एवमेतत् वार्त्ता भिन्नदेशेनावलम्बनात् । अस्तु तर्हि चलाचलयोरस्तु तत्सिद्धिप्रसङ्ग इति चेत् न स्वयं प्रतिबन्धासिद्धेः नच प्रसङ्गे व्याघातेऽपि पराभ्युपगमः शङ्क्यः नचैवं पराभ्युपगमोऽपि वस्त्रादिकादौ दृश्यते तावदयमिति चेन्न तन्तुवस्त्रादौ विपर्य्ययस्यापि दर्शनात् इदं मिथ्येति चेत् तत् कथं सत्यं अबाधादिति चेत् इह तर्हि बाधकान्तरं वाच्यं

मुहृद्दतीति चेत् स्यादप्येवं यदि नियमेनैकसंसृष्टस्यान्यसंसर्गं प्रति च्छिपदध्यक्षमुदियात् नत्वेतदस्ति युगपदेकस्यानेकसंसर्गप्रवृत्तमध्यक्ष-मविशेषात् सर्व्वसंसर्गं वा प्रतिच्छिपेत् न वा कमपि स्वात्मानमेव वा सर्व्वथा न विरोधं दीपयेत् अन्ततः परमाणोरप्येकस्यानेकैः पर-माणुभिः संसर्गस्वीकाराच्चेति । एतेन वृत्तिविकल्पोऽपि निरस्तः पर-माणुवृत्तावयवविकल्पे तुल्ययोगक्षेमत्वात् ।

अस्तु तर्हि चित्रे नीलानीलविरोधः नहि तदेकं रूपं चित्रत्वविरोधात् नानेकं एकावयवि समवायविरोधात् नचानेकं व्यापकं तथानुपलम्भविरोधात् न व्याप्यं तथानुपलम्भविरोधात् । नचाव्यापकं स्वाभावविरहविजातीयत्वविरोधात् । अन्यथा विरोधा-विरोधव्यवस्थाविरोधात् नचारूप एवावयवी चाक्षुषत्वविरोधादिति चेन्न चित्रत्वं हि नानात्वं वा मिथोविरुद्धनानाजातिसमवायं वा अभिप्रेत्यैकत्वाभ्युपगमे विरोधउद्भाव्यते सदैवमेतत् न तु तथाभ्युप-गमः । न खल्वनेकत्वं चित्रत्वं गुणेष्वप्यनेकेषु चित्रप्रत्ययप्रस-ङ्गात् । नाप्येकस्मिन् विरुद्धानेकजातिसमवायः विरोधेनैव निरा-कृतत्वात् अपि तु नीलत्वादिवच्चित्रत्वमपि जातिविशेषएव स चाव-यववृत्तिविजातीयरूपसमाहाराभिव्यङ्ग्यत्वान्नैकरूपावयवसञ्चितस्याव-यविन उपलम्भेऽप्युपलभ्यते । अतएव पटशुक्ले चित्रेऽपि चित्रप्रत्ययो न यद्यपि तथाप्यचित्रे पार्श्वे चित्रप्रत्ययोमाभूत् धवलप्रत्ययस्तु कुत इति चेत् अवयवरूपसहकारेणावयविनोऽपि तथा प्रत्ययात् । अतएव यत्रावयवरूपं न प्रत्यक्षं तत्र त्रसरेणावेतदपि नास्ति दृश्यमेव बाह्यालोकरूपमारोप्य पिञ्जर त्रसरेणुरालोच्यते । स्यादे-तत् यदि चित्रत्वं नाम जातिविशेषः कथं तर्हि विरुद्धजातीयरूप समाहारमात्रे चित्रप्रत्ययइति चेत् । नवै नीलधवलावयवेषु पटेषु कश्चिदपि कार्त्स्न्ये बाध्यश्चित्रप्रत्ययः कस्यापि वैधर्म्यनिमित्तस्तु न बाध्यते चित्रशब्दस्याश्चर्यादिमन्दवदनेकार्थत्वात् । नीलपीतादिषु

मिथःसंश्लेषेऽनारम्भकत्वेऽपि नैवं रूपप्रत्ययो भवतीति चेत् सत्यं अन्या-
न्तरोत्पादाभिमानात् स्थौल्यादिविषयप्रत्ययवदुपपत्तेरिति ।

अस्तु तर्हि परमाणुनिरासे सर्वविलोपः तथाहि षड्भिः परमाणुभिः संयुज्यमानः परमाणुः प्रत्येकं किमेकदेशेन संयुज्यते कार्त्स्न्येन वा । प्रकारान्तराभावात् न प्रथमः तस्यैकदेशाभावात् भावे वा परमाणुत्वव्याघातात् । न द्वितीयः परमाण्वन्तरेणासंसर्ग-प्रसङ्गात् नह्यस्ति सम्भवः एकत्रैव परिसमाप्तश्चेदन्यत्रापि वर्त्तते इति न बुद्ध्या समानयोगक्षेमत्वात् । नह्यस्ति सम्भवो नीलाद्येव विषय आकारो वा परिच्छिन्नात्मा पीतादिसंसृष्टात्मा चेति न द्वितीयः तद-भावात् एवमनाकारत्वमविषयत्वञ्च बुद्धेरित्यसत्यमेवेति चेत् तत् किं यत् प्रतिभासते तदसत् आहो न प्रतिभासत एव किञ्चित् । नाद्यः असत्यपि नीलपीतादौ ज्ञानस्य विकल्पस्य तदवस्थत्वात् नहि स्वरूपमेव विज्ञानं नीलोल्लेखि पीताद्यनुल्लेखित्वप्रसङ्गात् । नापि तदेकदेशः तदभावादित्युक्तत्वात् न द्वितीयः वाह्येऽपि वृत्तिविकल्प-स्यानुपपत्तेरिति ।

स्यादेतत् निःशेषसमुदायी शरीरशब्दस्यार्थः समुदाये कश्चिदेव समुदायैकदेशपदार्थः अथ बुद्धिः समुदायस्वभावा तस्या एकस्व-त्वात् तत् कुतः कार्त्स्न्यैकदेशविकल्पोत्थानं कथं तर्हि तद्विषयिणी तदाकारवती वा प्रकारान्तराभावादिति । यदि तदा स्वरूपेणेति ब्रूम इति चेत् स्फुरन्निरटङ्कितार्किकवैदिकाचिटङ्केन केवलमसम्भ-मभ्युपगत दूरङ्गत्वेति । एतेन तदतद्देशत्वं निरस्तं तथाहि बुद्धे नीलाद्याकारतां परिच्छिन्दद् ध्यक्षं तदभावव्यवच्छेदमुखेन तदविनाभूतां पीताद्याकारतामपि व्यवच्छिन्द्यात् तथाच कथमेका बुद्धिर्नीलपीता-द्याकारा स्यादिति तुल्योऽभयोः भवेदेवं यदि नीलाद्याकारतायाः पीताद्याकाराभावाविनाभावः स्यात् सएव तु कुतः नीलपीताद्या-कारायाः बुद्धेरेकस्मिन्नेव निश्चयात् प्रत्याकारनियतत्वे चित्रविप्रति-पत्तेरिति चेत् तदेतत् तुल्यं परमाण्ववयव्यादिषु । नहि तथाप्यनेक

परमाणुसंघातस्य परमाणोरन्यकार्यसंघातस्यावयवविनाभावे एकत्वेन नानुभूयते तथात्वे वा एकसंसर्गप्रतिपत्तिः कदाचिन्न स्यादिति तुल्ये वानुपपत्तिः । वाचिर्वैचित्र्यन्तु कोऽप्युच्यत इति । संयोगव्यवस्थापकैश्च घटकोणयुगपत्संयोगात् दिग्देशभेदाच्छायावृत्तिभ्याम् इत्यादयो निरस्ताः परमाणुसिद्धप्रसिद्धिभ्यामेव मूर्त्तत्वादयो निरवयवाश्रिताः आकाश व्यतिभेदादयस्तु सम्भाविता एव सर्व्वेण च हेतुद्वयाभ्यां प्रतिज्ञापदयो र्व्याघातः काम्यात्ययापदेशश्च प्रसङ्गद्वयाभ्यामाश्रयासिद्धिर्व्याप्त्य सिद्धिः दृष्टान्तासिद्धेः । अनवस्थापत्त्याविपरीततर्कस्य तदुपष्टम्भक- तया त्रुटेरनेकत्वप्रसङ्गस्य च विद्यमानत्वात् । न च प्रलयः परमाणो रसत्त्वसाधकस्य प्रमाणस्याभावात् । सावयवत्वापादकानाञ्च हेतू- नामनवस्थाव्यापकत्वात् तदन्यथात्वार्थं परमाणूनामनीशो यस्य भेदा- द्युत्थितामुखोदरमपि भित्वा निष्पततीति । न च कल्पिताश्रयाः कल्पितप्रतिबन्धाश्च प्रसङ्गा भविष्यन्तीति युक्तम् इच्छाकल्पितेन व्यवहारेण सर्व्वविधिनिषेधव्यवहारविलोपप्रसङ्गात् लोकव्यवस्था- पेक्षणे तु तद्विरोधिनोत्तरस्य निषेधकस्यात्मलाभाभावादित्यसकृदा- वेदितत्वात् अन्यथा सर्व्वमेतद्बुद्धावपि समानं सापि हि घटकोण युगपत्संयोगादिभिः सावयवा प्रसज्येत । तस्यामसिद्धा इति चेन्न अनुमानसिद्धत्वात् तथाहि बुद्धिः घटकयोगिनी मूर्त्तिमती च स- त्त्वात् व्यवहर्त्तव्यत्वाद्वा आरोप्यवदिति शक्यते विपर्य्ययस्य धर्म्मि ग्राहकप्रमाणसाधितत्वादनवकाशमिदमिति चेत् एवमन्यत्रापि प्रति सन्धेया इत्येषा दिक् ।

अन्यस्तु चक्षुषी निमील्य निर्द्वन्द्वीभवितुमिच्छन्नाह अस्तु तर्हि बुद्धेरपि विलोपइति । अथ तु किं वक्तव्यं यत्र हेत्वादिव्यवहारो नास्ति । अस्तु परं साम्वृत इति चेत् भवेदेवं यदि संहतिरपि परमार्थसती स्यात् अन्यथा तु न यथा वासकस्तथा साम्वृतोऽपि संहतिरपि सतीति चेत् अस्या अप्यसत्त्वेन किञ्चिदधिकमुक्तं पर-

माणुषु प्रत्येकमसम्भवात् न च नानात्वैकार्थसमवायिन्येव सा स्थौल्य मिति साम्प्रतं भूयस्त्वादिप्रत्ययनियमात् न च भागेष्वारोपितेन एकत्वेनेदमुपपत्तिमत् तदसम्भवात् अपि च परस्पराचिबुकनासिकादि परमाणूनामैक्यं क्वचित् क्वचिदारोपयति न च तेष्वभेदेन प्रथमानेषु स्थूलप्रत्ययः न च तत्त्वे स्फुरत्येव तद्विपरीतस्वरूपमारोपसम्भवः । अपि चैवमनेकपरमाणुतात्मिका परमाणुकोटिरप्यारोपिता परमाणुता मात्मतयैव परिस्फुरेत् । न स्थूलतया न च नानादिग्देशव्यापित्व- स्यैवमभिमतेति साम्प्रतं विरोधात् यदि हि नानादिक्काः परमाणवो देशतयावभासेरन् ऐकतया देशितया चारोप्येरन् तथा च कस्य नानादिग्देशव्यापिता देशिनोऽपरिस्फूर्तेः । अथ तथारोप्येरन् न नानात्वेन देशत्वेनवावभासेरन् तथा च कस्य नानादिग्देशव्यापिता देशानामपरिस्फूर्तेः तस्मादेकत्वारोपे परमाणुमात्रत्वावभास एव स्यादिति एवमखण्डमारभ्यमद्यराशिषु वा वार्त्तेति चेत् तावद्देश व्यापित्वसाम्येन तावत् परिमाणमध्यवस्वारोपः न चेदापि तथा स्यात् अन्यथाप्यसिद्धेः नचासन्नेवैकः स्थूलः परिस्फुरति बाधकानाम- भावत्वात् । एतेन प्रतिभासधर्मोऽपि निरस्तः सोऽपि ह्यसन् वाह्ये । बाधकावेति न भवीं गतिमतिवर्त्तते । अतीन्द्रियाश्च प्रत्येक मणवः कथं मिलिता अपि दृश्येरन् । अतीन्द्रियसमूहस्याप्यती- न्द्रियत्वात् विभिन्नोत्पादादैन्द्रियकत्वमिति चेत् किमद्यापि स्वप्ने हस्तं प्रसारयसि ।

अस्त्वेवं तथापि स्वभावभेदाज्जातिभेदो निराकृतो जातिसङ्कर प्रसङ्गात् तदभेदेऽपि तत्त्वान्तरता न कश्चिद्विशेषः । भवतु वा जातिवि- शेषोऽपि तथापि स्थूलत्वमैन्द्रियकत्वं प्रतिप्रयोजकं भवत्विन् अन्यथा स्थूलतामनाप्नुवन्नेकोऽपि परमाणुः कदापि तथोत्पन्नः प्रत्यक्षतामि- यात् नियमेन तु तद्विपरीतस्य प्रत्यक्षता यथाविभक्तस्थूलप्रत्यक्षतायामेव नियामकाचि अन्वयव्यतिरेकगम्यत्वाद्धेतुफलभावस्य । नच स्थिता

नोपाधित्वमनेन । पर्वतादिवल्लोकप्रतीतिसिद्धान् घटादीनुपादाय निरवयवत्वानुमानं स्यात् अन्यथा अवयविवर्त्तादिविप्रतिपत्तिहततया दहनानुमानमपि पर्व्वतादौ न स्यादिति चेन्नैवमविरोधात् । नहि अवयविवर्त्तादिसिद्धावप्याश्रयादयोऽन्यप्रकाराः सम्भवन्ति तथाहि सर्व्वत्र धूमपर्व्वते धूमधूमेन धूमवर्त्तिरेव साध्यते केवलं सांवृतेपि व्यवहारे सत्यान्तरव्यवस्थाप्नोति तस्मात् निर्भरः कर्त्तव्यः । इह तु घटादिव्यपदेश्येन स्थूलमेव यदि प्रतीयते कथं निरवयवत्वेन साध्येन न विरोधः अथ परमाणुरेव कथं न सिद्धसाधनं विप्रतिपन्नं प्रति न तथेति चेत् नन्वेवं कश्चित् परमाणूनां निरवयवत्वे विप्रतिपद्यते लोकव्यामोहनिवर्हणाय साधनमिति चेत् तथापि यं लोकः स्थूलमेकमुपलब्धवान् तस्य पक्षत्वे विरोधएव ततोऽन्यस्य पक्षत्वे सिद्धसाधनमेव एकः स्थूलोऽयमिति मिथ्येति चेत् एतदेव तर्हि साध्यतां किमनेनाप्रामाणिकपक्षप्रकल्पेन स्वप्नेन । नच तत्रैवेदं प्रत्यनुपसंहर्त्तुं अधिकरणत्वात् तस्माद्येन रूपेण यस्य पक्षत्वं विवक्षितं तेन सिषाधयिषितधर्म्माविरोधविवादाभ्यां तथानुमानप्रवृत्तिर्नोतोऽन्यथेति । नापि द्वितीयः विपर्य्ययापर्य्यवसानात् नच विवादविषयो निरवयवः तस्मान्न सन्निति विपर्य्ययः । नचैवं सावयवत्वं पक्षस्याभिप्रेत्य प्रवर्त्तयितुं शक्यते नच तत् त्वयेष्यते नच तस्येष्टौ तेनासत्वं प्रत्यक्षसाधनम् आश्रयासिद्धेर्विरोधादसाधारण्याद्वा नच विपर्य्ययोपि परेच्छया प्रवर्त्ततइति ।

यः पुनरवयविनि न्यायः तत् किं प्रत्यक्षाद्वयायो गरीयान् यद्येवं बुद्धावेव कोऽसौ तस्मादसारमेतत् तथापि यन्निरस्तसमस्तविरुद्धधर्म्माध्यासं तदेकमेव व्यवहर्त्तव्यं यथा विज्ञानं तथाच विवादाध्यासितमेकस्थूलानुभवगोचर इति स्वभावहेतुः नावश्यमाप्तानुवृत्तित्वादेकताव्यवहारस्य न ह्ययमेकव्यवहारो निर्निमित्तो ऽनियमप्रसङ्गात् नाप्यन्यनिमित्तः अथकठिनोष्णशीतादावपि तथाव्यवहारप्रस-

ङ्गात् । अस्तु तर्हि बाह्येषु सर्व्वेष्वनिश्चयसन्देहः तथ्यातथ्यविभाग-
स्याशक्यत्वादिति चेन्न तावत् सर्व्वस्य अयथार्थत्वादेव विभागोऽनुपपन्नः
उत्तरविरोधात् तथाहि विपरीतमवगतं मयेति लौकिकी प्रति-
पत्तिः अन्यथाख्यातिरिति च वैनयिकी यथार्था न वा उभयथाप्यु-
त्तरेण न सिद्धिः । शब्दसंलापसर्व्वमयाथार्थमात्रमेतन्न प्रतीतिरिति
चेन्न विवादानुपपत्तेः नहि व्यवहारमात्रे परीक्षकाणां विवादः नच
नायमस्तीति शब्दार्थे विवादइति चेत् एवं सत्यप्रतीतस्य निषेद्धुम-
शक्यत्वात् पराभिप्रायनिषेधार्थत्वाच्च विवादस्य अभ्युपगन्तृप्रतिषेद्धोः
प्रतिषेध्यप्रतीतिः कथन्नास्तीति नचान्यथानाऽन्यत्र प्रवृत्तिसम्भवः
अतिप्रसङ्गात् । नच ज्ञानसान्निध्यं नियामक मतिप्रसङ्गात् नच तत्
सहितोभेदाग्रहः । अग्रहप्राधान्ये भेदाविवक्षायां निवृत्तेरपि
प्रसङ्गात् तद्देशोरभेदाग्रहस्यापि विद्यमानत्वात् नासौ निवर्त्तकः
अपि तु भेदग्रहइति चेन्न रजतमेव नेदं रजतमिति ज्ञात्वा न
निवर्त्तेत भेदग्रहस्य तत्कारणस्याभावात् भावे वा विपरीतख्याति-
रभिन्ने भेदप्रत्ययात् तस्मात् प्रवर्त्तकवन्निवर्त्तकोऽप्यग्रहएव तेषां
स्वीकर्त्तुमुचितः तथा च स दोषस्तदवस्थएव । अथ भेदः प्रधानम्
अङ्गमग्रहः तदा सत्येव रजतज्ञानाद्भवते न प्रवर्त्तेत इदंरजतरज-
तांशयोर्भेदाभावादित्यादि स्वयमूहनीयम् । प्रवृत्तिवत् प्रतिपत्ताव-
प्युभयाग्रहकृत्यइति चेन्न अग्रहस्याविवक्षितत्वात् सामग्रीविशेषा-
देव तत्सिद्धेः तत्रेऽपरिस्फुरतीति तु नियमः नच क्वचिदपि भेदा-
वुभावपि तथ्यं यतस्तथा स्यादित्येषा दिक् । नापि सर्व्वस्यायथार्थ-
त्वात् तदग्राहकस्य यथार्थत्वाभ्यनुज्ञाविरोधात् तत् किञ्चित्
प्रमाणं किञ्चिदप्रमाणमिति विभागएव वस्तुगतिः । नचासौ प्रतीति
गतिमवधूय व्यवहारगोचरः कथन्तातु निश्चीयते अतः परतोवेति
वाच्यं स्वयं ग्राहकोवेति वा । तत्र न प्रथमः स्वसंवेदनस्यासिद्धेः
प्रकाशत्वस्यासाधारणत्वात् शब्दसाम्येनानुमानप्रवृत्तेः । नचाध्यक्ष

नच प्रमाणं सन्दिग्धभेदत्वात् स्वप्रत्यक्षस्योपलम्भस्य चार्थदृष्टिः
प्रसिद्ध इति परेण परवेदनेऽनवस्था स्यात्। नच क्रिया सजातीय
क्रियाकर्म्मतामश्नुते छिदावदिति। तर्कपुरस्कारान्निर्दोष इति चेन्न
उपलम्भापरपर्य्यायादृष्टेः सिद्धिर्निष्पत्तिर्वा स्यात् प्रतीतिर्वा आद्ये
अनागतोपलम्भवेदनप्रसङ्गः अनुपलब्धस्यानिष्पत्तेः। नचाविद्यमाने-
नाविद्यमानस्योपलम्भ इति असम्बन्धावस्थितिरेव। द्वितीये तु
सिद्धसाधनं नह्यनुपलब्धोपलब्ध उपलब्धीभवति नचैवं सत्यर्थोऽपि
नोपलभ्येत नह्युपलम्भप्रतीतिरर्थवेदनम् अपितूपलम्भनिष्पत्तिः।
उपलम्भादृष्टेः उपलम्भनिर्व्यापारेव व्यवहारः कुत इति चेत् माभूत्
तद्व्यवहारादेव निष्पन्नस्य वस्तुनो निवृत्तिः तथाच तन्निबन्धनो-
ऽर्थव्यवहारोऽदुर्व्वार इति। नचानवस्था अवश्यवेद्यत्वानभ्युपगमात्
निश्चयवत् अन्यथात्वनिश्चितनिश्चयस्य नार्थनिश्चयोऽपि सिद्ध्येत्
नचासावात्मन्यनिश्चय इति तदिदं वक्ष्यमाणमापनवृत्तान्तमनुहरति।
छिदादिवदिति दृष्टान्तमाश्रित्य भासमवसानं ज्ञानं न ज्ञानान्तर
कर्म्म तज्जातीयक्रियात्वात् या यज्जातीया क्रिया नासौ तत्क्रियाकर्म्म
यथा छिदा छिदान्तरस्येति तु न्यायविभ्रमः छिदावत् सर्व्वथा सजातीय
कर्मत्वे साध्ये बाधितविषयत्वात् पुरुषान्तरज्ञानस्य च ज्ञानान्तर-
वेद्यत्वात् स्वयमपि स्तुत्यादिगोचरत्वाच्च। स्वकर्म्मत्वे साध्ये दृष्टान्तस्य
साध्यविकलतया हेतोर्विरुद्धत्वादिति। नापि स्वग्राहकेण विवे-
चनानुपपत्तिः नहि प्रमाणग्रहणं यथार्थत्वेन नियतम् अप्रमाणेऽपि प्रमा-
णाभिमानात्। अन्यथा विपर्य्ययज्ञानादप्रवृत्तिप्रसङ्गाच्च ततो यदि
प्रामाण्यमापाततः स्फुरेदपि तथापि नियमहेतोरभावात् प्रमाण
मेवेदमिति निश्चयः कुतः स च भ्रम्यते पारलौकिकव्यवहाराङ्गत्वाच्च
शङ्कानिवर्त्तनेन तदप्रत्यूहं निश्चितमेवेति चेत् तन्निवृत्तिरेव कुतः
प्रमाणान्तरादिति चेत् तदपि निश्चयफलमन्यथा वेति अन्यथात्वेन
शङ्कानुच्छेदो निश्चयसाध्यत्वात्तस्य निश्चयफलत्वे तु योऽन्विष्यते न चासौ

स्वतइति। स्फुरणमात्रं तावदस्तु स्वतइति चेत् किन्तेन नैतदप्यननु-
संहितोपाधेरुपस्थितस्यायोगात्। नच विषयोपधानमात्रं प्रामाण्यं
तदाभाससाधारणत्वात् अपि त्वनुभवस्य सतोभूतार्थानुसन्धानम्।
तथार्थानुसन्धानेऽपि तस्य भूतत्वमनुसन्धीयत आरोपितत्वावर्त्तकविशे-
षाननुसन्धानात्। अननुसंहितस्य चारोपसाधारणत्वात् कश्चिद्विशेषो
ऽप्यनुसन्धीयतइति चेन्न सोऽपि प्राथमिकेन अन्यथानभ्यासदशायामन्त-
त्यापि संशयेन स्यात् अभ्यासदशोत्पत्तौ तु अनुसन्धानं व्याप्तिग्रहजनित
संस्कारसमुद्बुद्धसहकारवशेन भवत् प्रमाणान्तरशरीरएव प्रविशतीति
परतएवावशिष्यते। तथाप्यनवस्थेति चेन्न तावदसौ दृष्टान्तधारिका
प्रागेव तन्निश्चयात् धर्म्यादिका तु स्यादपि यदि प्रामाण्यमवश्य-
निश्चेयमभ्युपेयते। अथाप्रामाण्येन कथं परप्रामाण्यवेदनमिति
चेत् यथा विषयवेदनम्। अस्तु तर्हि धर्म्मिलिङ्गादारिका ताभ्या-
मननुमानात्। तन्निश्चयस्य च प्रामाण्यनिश्चयमन्तरेणानुपपत्तेः
न द्वैताभावात् यत्र लिङ्गज्ञाने धर्म्मिज्ञाने वा तथ्यातथ्यभावेन द्वैत-
मुपलभ्यते तत्र तथ्यत्वानिश्चये लिङ्गाभासशङ्कासंक्रान्ततया न
निश्चीयते यत्र तु तज्ज्ञानं तदेकनियतं तत्र तावतैव लिङ्गनिश्चय-
स्तदाभासशङ्कानुत्थानात्। एककोटिनियतोह्यनुभवो निश्चयः ज्ञान
तद्धर्म्मयोरपि च ज्ञाने न द्वैतमिति व्यवस्थितिरेव तस्यापि प्रा-
माण्यनिश्चयः परतएवेति न्यायसम्प्रदायः।

अतएवेति विशेषणाद्वयस्य स्वतएवेति तात्पर्य्यार्थः।
स्यान्मतम् एतदेव तु कथं निश्चेयं यदेवम्भूतमेककोटिनियतमेव
तावता तथाप्यनवस्थितिरिति चेन्न व्याप्तिज्ञानस्य साध्यादात्मन्य-
प्रवृत्तावपि सर्वोपसंहारेण यदुपाधिमनुपादाय प्रवृत्तिः तद्धर्म्मवत्त्वात्
तज्जातीयमन्तर्भाव्याधिः तत्र तत्राप्यविशिष्टमनुव्यवसायत्वात्। नच
सामान्येन नियमनिश्चये तदाक्षिप्ते विशेषे द्वैतशङ्कावकाशः।
यथा वाचकः शब्दइति स्वात्मनो वाचकत्वं न साक्षाद्विषयत्वे प्रवृत्ति

विरोधात्। तथापि सामान्येन यदुपाधिमधिकृत्य प्रवृत्तः शब्द-
स्तदभावात् शब्दशब्दो वाचको न वेति शङ्कया न परिभूयते नाप्यन-
वस्थेत्येवमिहापीति तर्काश्च भवन्ति धर्मिज्ञानं व्यभिचरेत्।
निरालम्बनमसदालम्बनं वा भवेत् निर्विकल्पकं तत् यद्यनुव्यवसायो
व्यभिचरेत् तदार्थकल्पकोऽपि न स्यात् आनन्तर्यस्यार्थप्रापकत्वाभावात्
यदि तज्जातीयं व्यभिचरेत् व्यभिचारोऽपि कश्चिदपि न व्यवतिष्ठेत
तदव्यवस्थितौ व्यभिचारोऽपि न स्यात् अन्यथाख्यातिरसत्ख्या तस्य
तदवस्थितौ चान्यथात्वं स्यात् तदवधिकत्वात्।

एतेन स्वप्नजागरावस्थयोरविशेष इति निरस्तम् असत्ख्याते-
रात्मख्यातेश्च निरस्तत्वात् अन्यथाख्यातेस्तु स्वख्यातिव्यवस्थामन्त-
रेणानुपपत्तेरिति। सा च जागरेऽपि यदि न स्यात् तदा न भवे-
देव तथापि कथमनयोरवस्थयोर्विभागः कर्त्तव्य इति चेन्न लोकसिद्ध-
त्वात्। किमनयोर्लक्षणमिति चेत् कार्यकर्मकरणदेशकालप्रबन्ध-
बाधः कालसाजात्यसम्वादवान् स्वप्नस्य प्रबन्धे कालातीतः कस्यचि-
देव विषयस्य बाधो जागरस्येति। एतेन बाह्यप्रबन्धोऽवस्थावि-
शेषः स्वप्नः प्रबन्धबाधकादिबाह्यप्रबन्धो जागर इत्यपि द्रष्टव्य-
मित्येकार्थे प्रमाणमात्रविप्लवो भवेत्। तथा च न्यायवृद्धैः प्रेक्षा-
वान्न तत्त्वमधिगच्छेदिति भियेति।

---

अस्तु तर्हि गुणगुणिनोरभेदाद्भेदात्ययं क्षणिकज्ञानमात्रापरि-
शेषादिति चेत् उच्यते। अस्ति तावदिह दर्शनस्पर्शनाभ्यामेकार्थं प्रति
सन्धानं तदिदमेकैकविषयं वा स्यात् समुदायविषयं वा तदतिरिक्त
वस्तु विषयं वा केवलगुणसंस्थाकारविषयं वा अलीकविषयं वा नाद्यः।
नहि यदेव रूपं तदेव स्पर्श इति। न च रूपं त्वगिन्द्रियग्राह्यम्
अन्धस्यापि नीलादिप्रत्ययप्रसङ्गात्। नचैकमेव वस्तु करणभेदेनान्यथा
प्रथत इति युक्तम् अनात्मकत्वप्रसङ्गात् भेदाभेदव्यवस्थानुपपत्तेश्च।

नापि द्वितीयः स हि एकदेशतया वा एककालतया वा एककार्यतया वा एककारणतया वेति । न तावदुपादानरूपैकदेशसम्भवः तयोः प्रतिनियतोपादानत्वात् सम्भवे वा तदेव द्रव्यमिति पृथैवमितं विवादेन । नाप्यधिकरणीभूतभूतलाद्याधारतया तत्सम्भवः चक्षुषा ह्युपलभ्यमाने भूतले रूपविशेषे घटोऽपि चक्षुषैवोपलभ्यमानो रूपविशेषस्तदाधार इति शक्यते निश्चेतुं तयोरधरोत्तरभावेनैकज्ञानसंसर्गित्वात् तदधिकरणाः स्पर्शादयोऽपीति तु कस्य प्रमाणस्य विषयः न हि स्पर्शादयश्चाक्षुषे चेतसि चकासति । त्वचोऽयं व्यापारइत्यपि नास्ति तत्रापि भूतलघटस्पर्शयोराधाराधेयभावाप्रतीतेः । अथ समुदायोऽस्तु तत् सम्भवः परस्पराश्रयत्वप्रसङ्गात् एकाधारतायां हि समुदायानुसन्धानं समुदायानुसन्धाने चैकाधारतानुसन्धानसम्भवइति अनवस्थाप्रसङ्गाच्च भूतलस्यापि समुदायत्वं किंकृतमित्यनुयोगानिवृत्तेः । अतएव नैककालतया प्रमाणाभावात् भावे वा रासभकरभयोरप्येककालतया समुदायत्वप्रसङ्गः भेदाग्रहस्य सकलेष्वसम्भवात् । अतएव नैककार्यतयापि उपादेयरूपस्यैककार्यस्याभावात् एकोदकाहरणाख्यया अर्थक्रियया इत्यपि न युक्तं रूपाद्यतिरिक्तस्य उदकस्यानभ्युपगमात् एकैकस्यानेकाहार्यत्वे प्रमाणाभावात् समुदायस्य चासिद्धेः । अतएव नैककारणतयापीति निमित्तमन्तरेण तु समुदायव्यवहारेऽतिप्रसङ्गः । तृतीये न विवादः । नापि चतुर्थः स हि विज्ञानमयमाश्रित्य वा स्यात् विपक्षादिव विसम्वादाद्वा । आद्ये तु रूपादिषु कः पक्षपातः प्रागेवार्थक्रियास्थितेश्च न द्वितीयोऽपि । ये हि रूपादीनामिति चेत्तेषां किन्तु तस्यैवेति किन्न स्यात् बाधकादिति चेत् तावत् अनयोर्गमध्यविरोधो रत्तारकविरोधो वा बाधकं निश्चितत्वात् अविकलपरमाणुरूपप्रत्ययाभ्रान्तेश्च । सम्बन्धाभावइति चेत् असम्बन्धस्यावस्तु कथं तदत् प्रतीयतइति चेत् तेषामन्योन्याधारादिति परिहारोऽस्तु तथैव यथा शरीरचेतनावदिति । रूपादिभिरेव सम-

अथात्मसद्भावे किम्प्रमाणं प्रत्यक्षमेव तावत् अहमिति विकल्पस्य प्रायशः स्वार्थविषयत्वात्। न चायमवस्तुकः सन्दिग्धवस्तुको वा ऽबाध्यत्वादप्रतिक्षेपाच्च न च लैङ्गिकः अननुसंहितलिङ्गस्यापि सम्प्रत्ययात्। अथ स्थैर्यमिव अननुभूते तदनुपपत्तेः। अनादिवासनावशादनादिरवस्तुक एवायमित्यपि न युक्तं नीलादिविकल्पसाधारण्यात्। इष्ट एव सम्यगनुवादयो नाश्वासे प्रमाणान्तरेऽपि कः समाश्वासो यतो नीलादिविकल्पेषु समाश्वासः स्यात्। तस्माद्वासनामात्रभावं विकल्पमवस्तुकमपि किञ्चित् कारणं वाच्यं तथाभासनाय तच्चैव। वा सिद्धतदाभासो वा प्रत्यक्षतदाभासो वेति। तत्र यथा प्रथमसमध्यमप्रकाराभावान्नीलविकल्पः स्वरूपं प्रत्यक्षमालम्बते तथाहमिति विकल्पोऽपि तथायं प्रत्यक्षपृष्ठभावित्वे साक्षादेव सवस्तुकः तदाभासे तु मूलेऽस्य पारम्पर्यात् सवस्तुकतेति। न च बाह्यप्रत्यक्षनिरस्तत्वेन निर्मूलत्वं बुद्धिविकल्पस्यापि तथात्वप्रसङ्गात् तत्र स्वसंवेदनं मूलमिहापि मानसप्रत्यक्षमिति न कश्चिद्विशेषः। शरीरादिवस्तुको भविष्यतीति चेन्न निरवधिशरीरेन्द्रियबुद्धितत्समुदायावलम्बनत्वेऽतिप्रसङ्गात्। स्वसम्बन्धिशरीरादावयं स्यादिति वाच्यं तत्र कः स्वीय इति वचनीयम्। अनन्यत्वं स्वत्वं सर्वभावानां तथा च यदा येनैव तदनुभूयते तदा प्रत्येतुः प्रत्येतव्यादव्यतिरेकादहमिति स्यात्। अतएव घटादयोऽपि कादाचित्कानन्यानुभविता इति न कदाप्यहमास्पदमिति चेत् एवन्तर्हि तन्मतेऽप्यहं प्रत्ययः शरीरादावारोपरूप एव ततः प्रत्येतुरन्यत्वात् बुद्धौ मुख्य एवेति चेन्न तस्याः स्थिरत्वेनानुभूयमानाया भिन्नस्य कर्तुरहं छिनद्मीतिवदहं जानामीत्यनुभवात् भोक्तादिप्रत्येतव्याकारवत् प्रतिपत्त्राकारोऽपि। प्रतिपत्तेरेवायमात्मा तथा भासत इति चेत् तर्हि प्रत्येतव्यप्रतिपत्त्राकारयोस्तुल्ययोगक्षेमत्वात् सिद्धं नः समीहितम्। अस्तु स्वोपादानमात्रमिति चेन्न तत्प्रतिभासने तदाकारस्यापि प्रतिभासप्रसङ्गात् आकारमन्तरेणाधारविशेषोऽनव-

आसात् प्रवृत्तिसन्तानान्योर्बुद्धिसन्तानः प्रतिपन्ना वयं तमालयवि-ज्ञानमाचक्ष्महइति चेत् । अस्तु तर्हि प्रवृत्तिविज्ञानोपादानमनादि निधनः प्रतिपत्ता स किं सन्तन्यमानज्ञानरूपः तद्विपरीतो वा इति चिन्तायामिष्यते निःश्रेयसिता चासौ प्रागिति ।

---

कः पुनरत्र न्यायः प्रतिसन्धानं सत्यमिदमित्यसिद्धमसत्यञ्च विरुद्धम् अवच्छिन्नमनैकान्तिकमिति चेन्न तत्त्वार्थानवबोधात् नहि प्रत्यभिज्ञानमात्रमत्र विवक्षितं तत् किं कार्य्यकारणयोरेकसन्तान प्रतिनियमः । सोपि विरुद्धइति चेत् एषोऽपि न विवक्षितो नः । कस्तर्हि पूर्वापरधियामेककर्तृकतया विनिश्चयः । एषोऽपि तासा-मुपादानोपादेयभावेनाप्युपपद्यतइति चेन्न स्थैर्यस्थितौ तदभावात् क्षणिकत्वेपि नैकजातीयत्वे सति तदुत्पत्तिरेवोपादानोपादेयभावः शिष्याचार्य्यधियामपि तथाभावप्रसङ्गात् । भेदाग्रहे सतीति चेन्न प्रकृतेपि तदभावात् । शरीरभेदाग्रहस्तावदस्तीति चेन्न भिन्नगन्ध ज्ञानात्माप्तेः अनुपलब्धपितृकेणापि पाकेनातिप्रसङ्गात् । घटकपाल क्षणयोस्तथाभावप्रसङ्गाच्च । एकाधारतया नियतइति चेन्न तस्य वास्तवस्य क्षणिकत्वपक्षेपि विषमसमयानां क्षणानामभावात् काल्प-निकस्य त्वतिप्रसञ्जकत्वात् शरीरबुद्ध्योरपि समानदेशताभिमानात् । एतेनानन्तरसमानदेशतावसायः प्रकृतिविकृती तयो हेतुफलयोरुपादा-नोपादेयलक्षणमिति निरस्तम् ।

काष्ठस्य तु प्रकृतेर्विकृतिरङ्गारइति कुतो निश्चितं भवता यावता वह्नेरेवायं विकारः किन्न स्यात् । वह्निसम्बन्धिकाष्ठादेव तदुत्पत्ते-रिति चेन्न काष्ठसम्बन्धेन वह्नेरेव तदुत्पत्तिरित्यपि किन्न कल्प्येत । पार्थिवं पार्थिवोपादानमिति नियमादिति चेत् कुतएतत् सभागेष्व-पलब्धेस्तथा दर्शनादिति चेत् एतदपि कुतः अन्यान्तर्भवतैकाव-सायादिति चेत् । अथ केयं सभगता नाम यदि साजात्यं सादेश्यं

वा तत् प्राङ्नियमम् एकसन्तानत्वञ्चेत्तदपि तदुत्पत्तिमात्रञ्चेत् नि-
मित्तनैमित्तिकयोरपि तथाभावप्रसङ्गः । उपादानोपादेयभावश्चेत्
कथं तेनैव तदवस्थाप्येत तस्मादेव तत्प्रतिसन्धानेनोपादानोपादेय
त्वग्रहमिति चेन्न आत्माश्रयप्रसङ्गात् । तद्योग्यतेति चेत् सैव
केति चिन्त्यं शक्तिविशेष इति चेत् स तावन्न प्रतिनियमाधिगतः । यथा
हि तेन तत्कर्तव्यं तथा तादृशापि तत् कर्तव्यमित्यपि नियमएव
अन्यथा तेन तत् कृतमित्यपि न निश्चीयेत तस्य दुरवज्ञेयत्वात् ।
तथा च निरीक्ष्य अग्न्यादेत आकस्मिकत्वं कार्यस्य तादृशत्वमापद्येत
तथा च न नियम उपपद्यते नापि प्रतिसन्धाननियतो विशेषाभावात्
अस्तु वैजात्यमिति चेन्न अनुपलम्भबाधितत्वात् नहि शिंशपाचाम्र
नीलक्षित्योर्यथापि जातिकृतं विशेषमुपलभामहे । अदृश्यत्वादय-
मदोष इति चेन्न दृश्यसमवायिन्या जातेरदृश्यत्वानुपपत्तेः उपपत्तौ वा
धूमादावपि व्यभिचारप्रसङ्गात् । तथा चावान्तरधूमएव वह्नेः कार्यः
स्यात् इति शङ्काकलङ्कितत्वात् । अथ धूमसामान्यमतिक्रमयेत् एव-
मेतदाद्यस्येव तथाभावादिति चेन्न तथापि शङ्कायास्तदवस्थत्वात् ।
तस्मात् कारणस्य वैजात्ये प्रमाणसिद्धे कार्यस्य तत्सादृश्येप्यवान्तर
जातिभेदः कल्प्यते हेतुवैजात्यस्य फलवैजात्यं प्रति प्रयोजकत्वात्
अप्रयोजकत्वे तस्याकस्मिकत्वप्रसङ्गात् । कारणसाजात्येपि कार्यस्य
वैजात्यं सहकारिवैजात्ये पर्यवस्यतीति गुरुकुलप्रघोषः । अन्यथा
प्रकृते परलोकोपि न सिध्येत् अचेतनोपादानकमपि ज्ञानमवान्तर-
जातीयं स्यात् । अचेतनमप्यवान्तरजातीयमुपादानं स्यात् दृष्टजात्य-
भेदेपि किञ्चिदेव निमित्तं भविष्यतीति शङ्कायाः समुत्थापयितु-
मशक्यत्वादिति ।

अस्तु तर्हि सहकारिभेदान्नियम इति चेत् स एवैकः कर्त्तेति
गीयते कथमेव कर्त्ता ननु तादृक् सहकारिपरम्परेति कुतोवि-
शेषादिति चेन्न तत्कर्तृकत्वं भिन्नकर्तृकेभ्यो व्यावर्त्तते ननु तादृक्

दुपादद्यादिति युक्तं तथात्वे निमित्ततामपि न यायादुपादानत्वव्याप्तत्वा
न्निमित्ततायाः अन्यथा निमित्ततामात्रमुपगम्यैवास्य निवृत्तौ सर्व्व
सन्तानोच्छेदः अविशेषात्। अथैवमिति युक्ततरमस्थायिनामपि किञ्चित्
करणे प्रवृत्तिविरहेरसत्त्वप्रसङ्गः। तथा च तत्पूर्व्वस्थायिनामपीत्यनेन
विपर्य्ययेणाविशिष्टत्वात् अपादापद्येतेति साधुकार्य्यकारणभावः प्रति
सन्धाननिबन्धनसमन्वितः स्यात्। तस्मादन्यदेव निमित्तं किञ्चि-
दुपाददीत तथा च न प्रतिसन्धानमपूर्व्वानन्तसन्तानप्रवृत्तिश्च प्रस-
ज्येत स्वयम्।

अर्थान्तरानुपादानादन्यदानादनन्तता।
निधौ न प्रतिसन्धिश्च सङ्करेऽनेकसंश्रितिरिति संग्रहः।

नापि द्वितीयः तस्यापि भेदाग्रहः स्वरूपतो वा स्यात् विषयतो
वा स्यात्। आद्ये हि पूर्व्वाहमिति प्रत्ययमात्रादा प्रवृत्तिमात्रे-
भ्योऽपि वा न तावदाद्यः अहमित्यवासिषम् अहमिति जानामि
अहमिति ज्ञास्यामीति त्रैकाल्योल्लेखस्य भेदनिश्चयमन्तरेणानुपपत्तेः
कथञ्चिदुपपत्तौ तदर्थस्यैव प्रतिसन्धिरुचितो न प्रवृत्तिविशेषमात्रेणा-
भवि। न च तेभ्योऽपि भेदाग्रह इति चोक्तमेव। नापि विषयतः स हि
साकारो वाऽऽत्मन्तरं वा अलीकं वेति। नाद्यो दूषितत्वात् न
द्वितीयः स्वयमभ्युपगमात् योऽभ्युपगच्छेत् सोऽपि विरुद्धधर्म्माध्यासा-
द्भेदमिच्छेत् तन्निवृत्तौ च तस्य निवृत्तिम्। न तृतीयः अहमिति
विकल्पस्य सवस्तुकतायाः प्रागेव प्रतिपादनात् अवस्तुकत्वेपि न तत्र
प्रवृत्तावयोगि भेदाग्रहसम्भवः सदसदारोपितसत्त्वारोपितासत्त्वयोश्च
सर्व्वथापदेशाभेदेन षड्विधस्यापि भेदस्याग्रहो अभेदारोपेणापि विक-
ल्पतया न तत्र सम्भवतीत्युक्तत्वादिति। अथवा दृष्टानुभवः कालान्तर
भाविनीं स्मृतिं जनयेत् तज्जनितो वा संस्कारः सोऽप्यतीन्द्रियः
प्रत्यक्षसिद्धो वा अतीन्द्रियोऽपि तावत् कालावस्थायी सन्तन्यमानो वा
अध्यक्षसिद्धोऽपि तदुत्तरबुद्धिधाराक्रमः तदन्यो वा तद्विशेषो वा

विशेषोऽप्यनुभवप्रभवत्वमात्रं वा अनुभवितृसन्तानवैजात्यं वेति । तत्र न प्रथमः । अनुत्पन्नानन्वयध्वस्तयोरविशेषात् नापि द्वितीयोऽन्यस्यानुपलब्धिबाधितत्वात् नाप्यनुभवप्रभवत्वमात्रं विशेषः नहि कर्षककरोपनीतमेव बीजं क्षितिमासाद्याङ्कुरं कुरुते न तु प्रमादपतितं तथा नीलाद्यनुभवप्रभवसन्तानः नीतानुभवेनैवोपनीयतां नीलाद्यनुभवेनैव वेति न कश्चिद्विशेषः । एवञ्चाननुभूतेऽपि स्मरणप्रसङ्गो नवानुभूतेऽपीति । शालिप्रभवस्य बीजस्य शालित्वप्रतिसन्धानवन्नियम इति चेन्न क्षीरजम्बूरसपायिनीपवनजाद्यरवजनितविपरीतपारावतवदनियमदर्शनेन तस्याप्रयोजकत्वात् वैजात्यन्तु विशेषो भवेत् यथा क्षीरावसेकादम्लत्वं परित्यज्य माधुर्यमुपादायानुवर्त्तमानामलकी कालान्तरेऽपि माधुर्यमनुमीलयति लाक्षारसावसेकाद्वा धवलिमानमपहाय रक्ततामुपादायानुवर्त्तमानं कार्पासबीजं कुसुमेषु रक्तताम् । नचैवं प्रकृतेऽपि जवाकुसुमाद्युपधानसन्निधानेऽपि तद्रूपतामनादाय धवलिमानमेव सन्तन्वानस्य स्फटिकस्येव ज्ञानस्य विषयोपरागमपगमय्य चिद्रूपतामात्रेणानुवृत्तेः सर्वाकारत्वमेव सर्वज्ञानानां किन्तु कश्चिदाकारः पटु रन्धे त्वपटव इति तु स्वदर्शनस्यावतो विरुद्धधर्माध्यासादपि न भीः । नहि स एव पटुरपटुश्चेति सम्भवति नच स्वसंविदिति रूपस्यापाटवार्थं पश्यामः । निराकारपक्षेऽपि यावानर्थो बुद्धेर्विषयः तावति स्फुटैव सा । यत्र तु अस्फुटा नासौ तद्विषयः तथात्वे वा विषयेतरव्यवस्था न स्यात् सांशत्वयुक्तमेतदिति दर्शितं प्राक् तस्मादतीन्द्रियः संस्कारः परिशिष्यते । स च न सन्तन्यमानः सर्वत्र स्मृत्यादिप्रसङ्गे प्रकृतिसन्ताने फलानयनबाधप्रसङ्गात् अन्यत्र संस्कारे अन्यत्र फलेऽतिप्रसङ्गात् परम्परयैकोपादानतानियमे संस्कारान्तरसन्तानेऽपि स्मृतिप्रसङ्गात् । तस्मात् स्वोपादानस्य स्मृतिं करोतीति मत्यन्तराभावादापातितस्तमप्युपेयमेव । तथा च स्मृतेः कालान्तरसम्बन्धात् संस्कारतदुपादानयोः स्थैर्यमयत्नसिद्धमतर्ज्जनीक-

कारिणि रज्येदपकारिणि द्विष्यादिति तदेवमेतत् योऽपि मोक्षमुप-
कारं मनुते स रज्येत। दुःखमुपाददानस्तत्परिपन्थिनं द्वेषादसंप्रत्य-
याद्वा परिहरन्नेव समीहितं मोक्षमादद्यान्नतु विपर्य्ययात् यश्च भोग
सोऽपि तथेत्यनुकूलमेव प्रतिकूलत्वेन गृहीतं मन्दैः। अन्यथाप्यनु-
रज्येदन्यथापि द्विष्यादिति तु न दृष्टं गोवैद्यकेऽपीति। तथापि दुःख
हेतुत्वादग्न्यादिवदसौ हीयतामिति चेत् यादृशो दुःखहेतु
स्तादृशो हेय एव सोपाधिश्च तथा निरुपाधिरपि हीयतामिति चेत्
अशक्यत्वान्निष्प्रयोजनकत्वाच्च। नहि तस्य हानं विनाशो नित्यत्वात्
नापि विप्रयोगोऽव्यापकत्वात् नाप्यप्रतिपत्तिः यथा यथा तदर्थं यत्न
स्तथा प्रतिपत्तेः प्रत्यापत्तेः उपेक्ष्यत इति चेत् सततैवैतावन्तं कालमु-
पेक्षा तथापि तन्नाशासिद्धेः निष्प्रयोजनश्चैतत्। सोपाधेर्हि विनाशो
दुःखहानाय निरुपाधेस्तु किमर्थम्। पुनः सोपाधिशङ्कयेति चेन्न
बीजाभावात् कुतः पुनरुपाधेः। तथा सति भावनाक्रमेण निःश्रेयस
सिद्धेः किमस्योपादानं विशेषः कुत अनात्मनः शरीरादेः किं पुनरत्र
प्रमाणं न्याय आम्नायश्च शरीरमेव हि तावन्मूढोऽभिधिक्षमनात्मानं
मन्यमानस्य तदुपादाय तदनुकूलेष्वेव विषयेषु तृष्णा विजृम्भते तथा
च तत्प्रतिकूलविषये द्वेषः। नचैतत् केवलात्मदर्शिनः सम्भवति निरु-
पाधेः पुनर्विच्छेदाभावात् तैरनुपकार्य्यत्वात् छेदक्लेशदाहशोषा-
द्यनुपपत्तेः विधिनिषेधानधिकाराच्च जन्मजातिवयोवित्तसंस्कारा
द्युपयोगाच्च ततः प्रवृत्तेः ततोऽनात्मन्यात्मग्रहो निदानं संसारस्य
मिथ्याज्ञानञ्च तत्त्वज्ञानान्निवर्त्तते तच्च श्रवणमननादिक्रमेणोत्पद्यते
कारणनिवृत्तौ च कार्य्यं न जायते उत्पन्नश्च धर्माधर्मप्रचयो
भोगेन क्षीयते इति न्यायार्थसारसंक्षेपः। आम्नायसारसंक्षेपस्तु
अशरीरं वाव सन्तम् इत्यादि। तदप्रामाण्यं प्रपञ्चमिथ्यात्वसिद्धान्ताभेद
तत्त्वोपदेशपराणां पुंवचसां व्याघातपुनरुक्तादोषेभ्य इति चेन्न सता-
त्पर्य्यकत्वात् निष्प्रपञ्च आत्मा ध्येयो मुमुक्षुभिरिति तात्पर्य्यं प्रपञ्च

मिथ्यात्वश्रुतीनां आत्मनश्चैकस्य ज्ञानमपवर्गसाधनमिति अद्वैत
श्रुतीनां दुःखोऽयमिति पौनःपुन्यश्रुतीनां बहिःसङ्गपरित्यागो निर्मम-
त्वश्रुतीनां आत्मैवोपादेय इत्यात्मश्रुतीनाम् शाक्यवदनुष्ठाने ता-
त्पर्यं प्रकृत्यादिश्रुतीनां तन्मूलानाञ्च सांख्यादिदर्शनानाञ्चेति नेयम्।
अन्यथा "जैमिनिर्यदि वेदज्ञः कपिलो नेति का प्रमा। उभौ च यदि
वेदज्ञौ व्याख्याभेदस्तु किं कृतः"। प्रामाण्यन्तु तस्य कुत इति चेन्न आप्तो
क्तत्वात् तदसिद्धमिति चेन्न विश्वस्य कर्त्तुरनुमानसिद्धत्वात्। विवादा
ध्यासितकर्त्तृकं सकर्त्तृकं कार्य्यत्वात् इति विशेषविरुद्धोऽयं हेतुरिति
चेन्न विरोधिविशेषाप्रतीतौ विरोधस्य प्रत्येतुमशक्यत्वात् तत्प्रतीतौ
वा तद्द्वोपलम्भनियमेन विरोधस्य बाधितत्वात् सर्वथैवाप्रतीतस्यापि
न्यायगोचरत्वमपि कथमिति चेन्न सामान्यानुमानसिद्धत्वात्। ततोऽपि
कथं सिध्यतीति चेत् अप्रतीतप्रत्यायकं प्रमाणं नत्वप्रतीतेन विरोधः
प्रत्यगिज्ञानइत्यतोविशेषात्। का पुनरस्यानुमानस्यैवंभूतप्रत्यायके
शक्तिरिति चेत् आकाङ्क्षानुपपत्तिनियमभेदेन द्विविधः सम्बन्धः
तत्राकाङ्क्षानियमाभ्यामन्वयी अनुपपत्तिनियमाभ्यां व्यतिरेकीति
विभागः। अस्तु तर्हि सत्प्रतिपक्षत्वं शरीराजन्यत्वादिति चेन्न अस-
मर्थविशेषणत्वेनासिद्धभेदस्यानुत्थानत्वात्। असिद्धिपरिहाराय
विशेषणं समर्थमिति चेन्न एकासिद्धिं परिहरतो द्वितीयापत्तेः
अन्यथा विवादाध्यासितं नादृष्टहेतुकं शरीराजन्यत्वादित्यनेनापि
जन्यत्वस्य सत्प्रतिपक्षप्रसङ्गात्। तर्हि सर्वापरिशुद्धिरस्तु शरीरनि
वृत्तौ बुद्धिनिवृत्तेः। बुद्धिनित्यत्वे शरीरानुपयोगात् प्रयत्ननित्य-
तायां ज्ञानेच्छानुपयोगादिति चेन्न प्रयत्नस्य विधर्म्मकत्वात् नहि
ज्ञानकार्य्यो ज्ञानविषयकस्य कर्त्तृत्वं तत्कार्य्यत्वनिवृत्तौ। कारणतया
ज्ञानं नापेक्षितं विषयार्थन्तु तदपेक्षा केन वार्य्यते। अथ तस्य स्वरू-
पेण विषयप्रवणत्वं ज्ञानत्वप्रसङ्गात्। अयमेव हि ज्ञानात् प्रयत्नस्य
भेदो यदयमर्थाप्रवण इति। अथ निर्विषयत्वात्किमसि वाच्यम् अप्रकाशक

वच्छिन्नाः कादाचित्कत्वप्रतिनियतशक्तिकाः परस्पराधेयतयाप्युप-
पन्नेरिति उत्तानोत्तानितमेतत् कल्पनमस्याप्युपपत्तेः । तथाहि चत्वा-
रो हि जगति भावाभवन्ति विरोधी वहिर्वृत्तिः सहवृत्तिरन्यतरवृत्ति-
श्चेति ननु पञ्चमः प्रकारः शङ्कितुमपि शक्यः विरोधाविरोधयोः
साहित्यासाहित्ययोरधिकानाधिक्ययोः परस्परनिषेधरूपत्वात् ।
तत्र प्रथमः सोपाधिकत्वेन शङ्कनीयम् अकार्य्यस्यैवाकार्य्यस्यापि वा स-
कर्त्तृकत्वप्रसङ्गात् । नचेदमिष्टम् अकार्य्यस्य कारकव्यापारेण सह
विरोधे कारकविशेषस्य कर्त्तुरनवकाशात् । नापि तृतीयः तुल्ययोग-
क्षेमयोरविशेषात् व्यभिचारशङ्कानाधायकत्वाच्च । चतुर्थस्तु स्यात्
सोऽपि न शरीरान्तर्भूतवृत्तिः चेष्टमानशरीरहेतुकस्यापि कस्य-
चिदचेतनपूर्व्वकत्वप्रसङ्गात् । नचेदमिष्टं चेष्टाचेतनयोरविनाभाव-
भङ्गप्रसङ्गात् । नापि सहवृत्तिः देहस्यानुपाधित्वे तस्यानुपाधि-
त्वात् तयोस्तुल्ययोगक्षेमत्वात् अन्यथाभावे सहवृत्तिनियमानुपपत्तेः ।
शरीरस्य च सोपाधित्वं कथं व्यापकत्वात् तत्कार्य्यत्वस्योपाधेर्विद्य-
मानत्वात् । नाप्याश्रयतया तथाभावो भोगोपाधित्वात् । नाप्युप-
करणप्रापकतया साक्षात् प्रयत्नानधिष्ठेयतया उपाधित्वात् अन्यथापि
तत्प्राप्तेरिति । नाप्यधिकवृत्तिः शरीरविनाकृतस्य कर्त्तुः स्वयमन-
भ्युपगमात् ।

अस्तु पाक्षिकोऽभ्युपगमः तेन न कार्य्यत्वमात्रात् कर्त्तृमत्त्वसिद्धिः
शङ्कितोपाधित्वात् । नचोपाधेरेव तत्सिद्धिः तस्य स्वयं सन्दिग्धासिद्ध-
त्वादिति चेत् उभयथाप्यशरीरिकर्त्तृकत्वव्यवस्थितिनियमात् । किन्तु
कथञ्चिदुपाधिमादाय स व्यवतिष्ठतां यद्वा कार्य्यत्वमेवेति सन्देहः
परिशिष्यते गत्यन्तराभावात् सोऽपि निवार्य्यते । न तावदिह
व्यतिरेकेणानित्यज्ञानसम्भवः तयोः कार्य्यकारणभावनिश्चयात् ततो
नित्यम्भवेत् ततः सर्व्वविषयञ्च नियतविषयतायाः अनित्यत्वेन व्याप-
नात् विषयनियमस्य सामग्रीप्रतिसमवधानाधीनतया नित्यात्मस्थः

उपाध्यनुपादाय निवर्त्तमानाया अनित्ये विश्रामात् सर्व्वगोचरे च ज्ञाने सिद्धे चिकीर्षाप्रयत्नयोरपि तथाभावः तदेकविषयत्वात्तयोः। तथा च कश्चिदुपाधिमादायाशरीरपूर्व्वकमपि किञ्चिदेव कार्य्यं कर्त्तृ पूर्व्वकं भविष्यतीति शङ्कापिशाच्याः क्वावकाशः। एवमन्यत्राप्यनया दिशोपाधिशङ्का निराकरणीयेति निरुपाधिसम्बन्धसिद्धिः। विपक्ष सम्भवे च साधनप्रयुक्तसाध्यसद्भावसिद्धौ साध्याभावप्रयुक्तसाधना भावलक्षणस्य व्यतिरेकस्यापि सिद्धेर्न तदर्थम् पृथगपेक्षेति। द्वितीयेऽपि श्रवणसम्पुटमवधाय कालकण्ठ श्रूयताम्। तथाहि दण्डादिषूदासीनेषु दृष्टोऽदृष्टो वा कारकव्यापाराविर्भावशक्तिश्चेतनो निरूपितो न वेति त्वमेव प्रष्टव्यः। नचेत् कुतः कारणाद्युदासते निरूपश्चेत् कथमदृष्टव्यतिरेकसंशयः तथापि दृष्टस्यान्वयः तादृशस्य व्यतिरेकोऽप्युपलभ्यत इति चेत् कोऽत्र विप्रतिपद्यते कारकप्रयोक्तुरुभयथापि तुल्यत्वात्। देही तादृश इति चेत् कोऽस्यार्थः किं देहद्वारैव कारकाणि प्रयुङ्क्ते चेतनः आहो देहं प्रयुञ्जान एवेति। न पूर्व्वः देहस्यापि कारकतया देहान्तरप्रयोज्यतायामनवस्थापातात्। न द्वितीयः विषभक्षणपाणनादौ व्यभिचारात्। देहं धारयन्निति चेत् सोऽयं देहाधार्य्यः किं कारकतया तत्कारकान्तरप्रयोगार्थम् अथ स्वकर्म्मोपात्ततामात्रेण। प्रथमे न विवादः देहस्य क्वचित् कार्य्यकारणतयाधिष्ठाननियमात् यत्रापि न तत्कारकं तत्रापि तदधिष्ठेयमिति तु कश्चेतनोऽभिदध्यात्। द्वितीयेऽपि यः साक्षादधिष्ठातुमशक्तः स साक्षादधिष्ठेयमुपादाय तत्प्रयुञ्जीत न त्वेकस्य साक्षादधिष्ठानयोग्यम् अन्यस्यापि तथेति नियमः देह एव व्यभिचारात् तृतीये त्वज्ञानलक्षणकल्पं कायेनाप्रयुञ्जानो स्वविशेषणे सन्निविशतीति तत् यथा धूममात्रं प्रति तार्णदहनान्वयव्यतिरेकयोराक्षेपकवदिति। यदि चाकारकस्य तत्प्रयोगद्वारकस्यापि देहस्यावश्यमपेक्षा स्यात् तदेव कुलालश्चायमान् घटस्य कर्त्ता स एव अरम्भशरीरवानपि दण्डा

स्थितिः यतः पटत्वाद्यवस्थायामपि आरम्भमात्रतः कार्य्यप्रत्याशा स्यात् एकप्रवृत्तौ तु सर्वप्रवृत्तिरप्रवृत्तौ प्रवृत्त्यावच्छेदेन व्यवस्थितेः ।

अथ मतं नैवेयं प्रक्रिया स्वभावान्तु कार्य्यतानुविहितभावाभावं चेतनं वा चेतनं कारकमुच्यते संहतौ च सर्वं स्वप्रधानमुपादानि तद्व्यवस्था तु कथञ्चिदिति चेन्न तथापि निरुपादानत्वप्रसङ्गात् । जातिप्रतिनियतत्वहेतुत्वेन तदवश्यमुपेयं तस्य प्रमाणसिद्धतयापह्नोतुमशक्यत्वादिति चेन्न उपादानसाम्यस्य सहेतुत्वे निमित्तवैचित्र्येऽप्येकजातीयत्वप्रसङ्गात् । निर्निमित्तं वा प्रसज्येत उपादानादेव तथाविधात् तदुत्पत्तौ न किञ्चिदेतत् । कस्मात् सामग्र्याः सर्वसम्भवइति चेत् कुत एतत् निमित्तसहितस्यैवोपादानस्य प्रत्यक्षानुपलम्भाभ्यां कारणत्वावधारणादिति चेन्न तुल्यप्रमाणविषयत्वात्तयोः । तुल्यत्वं तस्य कथञ्चिदविवक्षितमिति चेन्न चेतनेऽपि तथा किन्न स्यादिति तस्मादुपादाननिमित्तयोर्यथा परस्परसहितयोरेककार्य्ये शक्तिस्तथा चेतनाचेतनयोरपीत्येकनिवृत्तावितरनिवृत्तिप्रसङ्गः । अपि च सत् पिण्डदण्डादिषु स्वव्यापारे पारतन्त्र्यं तावत् नियमेनोपलभ्यते ।

तदिदं दण्डादिमात्रानुबन्धं वा स्यात् अदृष्टविशेषोपग्रहानुबन्धं वा अचेतन्यमात्रानुबन्धं वेति निपुणं निरूप्य । तत्र न प्रथमः वेमादीनां स्वातन्त्र्यप्रसङ्गात् । तेषां वेमादित्वमात्रानुबन्धमिति चेन्न दण्डादीनां स्वातन्त्र्यप्रसङ्गात् नचैतत् कार्य्यविशेषनियतं गवाभ्यञ्जनादौ दण्डादीनां स्वातन्त्र्यप्रसङ्गात् । न द्वितीयः तस्य जातिविशेषानियतत्वे घटार्थमपि कदाचित्तेषां स्वातन्त्र्यप्रसङ्गात् तन्नियतत्वे स एवोच्यताम् । नच घटपटशकटकटाद्यादिगतं दण्डवेमवासीसन्दंशादिगतं वा सामान्यमुपलभेमहि । अस्त्येतौ यतः शरीरिकर्तृत्वानुमानमिति चेन्न घटादावेव तथाभावात् । अस्तु वा संस्थानविशेषः नच स एवात्र निबन्धनं तस्याभावेऽपि जलादीनाञ्चेतनप्रेर्य्यत्वदर्शनात् । नच शरीरप्रेर्य्यं यत्तदेव चेतनप्रेर्य्यमिति नियमः शरीर

स्यैव स्वातन्त्र्यप्रसङ्गादित्युक्तप्रायम्। तस्मादचैतन्यमात्रनिबन्धनमेतद्बुद्ध्यादिषु तथाच परमाणवदृष्टादिष्वपि तस्य भावाभावाभावि-दुर्वारः।

सद्देतत् कार्य्यं नाश्रयवत्तथा व्याप्तं सा च विपक्षेऽसम्भवन्ती स्वव्याप्यानुपादाय व्यावर्त्तमाना स्वपक्षे विश्राम्यतीति उभयमुखी प्रतिबन्धसिद्धिः। कः पुनरयं प्रतिबन्धः स्वाभाविकः सम्बन्धः। कः स्वाभाविकार्थः निरुपाधित्वं कः पुनरुपाधिः साध्यप्रयोजकं निमित्तान्तरं किं वास्य लक्षणं साधनाव्यापकत्वे सति साध्यव्यापकत्वे सति साध्यव्याप्यत्वं कथं पुनरेवंलक्षणकोऽर्थः प्रत्येतव्यो निराकर्त्तव्यो वा विपर्य्ययाविरोधबाधकाभ्याम्। किं बाधकम् अन्वयव्यतिरेकविषयभूयोदर्शनसाहायकमाचरन् तर्कः। स चाप्रामाण्येऽप्यन्यथानवस्थानिष्टप्रसङ्गभेदेन पञ्चविधोऽपि क्वचिद्व्यभिचारं निराचष्टां क्वचित्तन्निबन्धनमुपाधिमवधारयन् सहायीभवतीति नास्ति न कश्चिद्विशेषः। तदुदाहरणानि चाग्रेव यथायथं परिशेष्याणीति।

अथ न्यायदुर्बलस्य प्रतिबन्धीकरणं यदुक्तं शब्दनित्यत्वस्यापि सिद्धिः स्यात् दृश्यमानानियतत्वात् प्रत्यक्षबाधस्य। नच दृश्यत्वनिवृत्तेरेव विनाशित्वनिवृत्तिः अव्यापकनिवृत्तावव्याप्यनिवृत्तेरयोगात् विनाशागतकार्य्यत्वप्रयुक्तत्वाच्च दृश्यत्वव्याप्तेः तेन तन्निवृत्तावपि नाकार्य्यस्य शङ्कस्य निवृत्तिरिति। एतच्च सत्त्वार्थसिद्धग्राहकत्वस्य न परिशंसाय निष्प्रयोजनविषयत्वात्। तथापि सम्भावितस्याकीर्त्तिभिया नोपेक्षामर्हतीति प्रतिबन्धिरिति चेत् तर्हि माभैषीरिव मुच्यते। तथाहि अर्थतः प्रतीयशब्दसाधनप्रकरणादयं प्रश्नः किन्ते विनाशशब्देनान्यदेव किञ्चिद्विवक्षितं रोमादिविनाशजातीयं वा अयम्। प्रथमे सिद्धसाधनं लोकविरोधश्च लोके तद्विपरीतस्यैवार्थस्य विनाशशब्देनाभिधानात्। द्वितीये त्वन्वयव्यतिरेकाभ्यां संस्थानविशेषकार्य्यत्वमेव व्यवहारस्थापनादाकारदभिव्यक्तेः कथं

तदधिष्ठितेषु परमाण्वादिषु तत्सम्भवः सम्भवे वा न कथं तत्र घटत्वादिकमपि । अस्तीति ब्रुवतः कथं न जातिसङ्करप्रसङ्गः कारणं विना कार्य्याभावप्रसङ्गो वा तथा अन्वयव्यतिरेकौ कार्य्यकारणभावे प्रमाणमिति सर्वं समाकुलमाकुलमतेः । तस्मादतीन्द्रियं नित्यं वा विज्ञानमेव न भवति यच्च विज्ञानं तच्च प्रत्यक्षबाधितमिति कुतस्तदनुमानावकाशः ।

एवं तर्हि नित्यं ज्ञानमित्यपि व्याहतम् इन्द्रियादिविकारमात्रव्यक्तिव्यङ्ग्यत्वाज्ज्ञानत्वसामान्यस्येति चेन्न अतद्रूपत्वादतदाक्षेपकत्वाच्च । नहि ज्ञानत्वस्य जन्यज्ञानव्याप्यत्वस्याभावे ज्ञानत्वमचेतनानामपि चेतनत्वप्रसङ्गात् । नापि नित्यत्वं ज्ञानत्वाभावमाक्षिपेत् ज्ञानत्वेनाविरोधात् विरोधमूलस्य विपक्षबाधकस्याभावात् दर्शनादर्शनयोश्चार्थप्रवणत्वेनाप्रयोजकत्वात् रूपत्वानित्यत्वयोश्चक्षुर्मात्रग्राह्यव्याप्तत्ववत् । न चेन्द्रियादिविकारो ज्ञानत्वाभिव्यक्तिहेतुः स्वयं प्रत्यव्यक्तिमात्रस्यैव तन्निरपेक्षस्यातथाभावात् एतदनपेक्षस्य तु तस्यातिप्रसञ्जकत्वात् । अथ बुद्ध्यपेक्षया केवलस्य कर्तृत्वे विश्वस्य वैश्वरूप्यव्याघातः सततोत्पत्तिप्रसङ्गश्च अदृष्टापेक्षायाश्च कल्पनागौरवं तत एव तदुपपत्तेः स्वार्थं प्रवृत्तावनीश्वरत्वप्रसङ्गः परार्थं प्रवृत्तावदुःखमयसर्गप्रसङ्गः । एवमेव प्रवृत्तावचैतन्यम् एकत्वे प्रमाणाभावः अनेकत्वे त्वसार्वज्ञ्यं प्रतिनियतसामग्रीनिरूढत्वादित्यादयः । तत्र कारणचक्रस्यैकदेशमुपादाय शेषवैयर्थ्यं प्रसञ्जने सर्ववैयर्थ्यप्रसङ्गः । अन्वयव्यतिरेकाभ्यां सिद्धकारणभावस्य न वैयर्थ्यमिति चेत् अनुमितकारणभावस्याप्येवं प्रमाणसिद्धत्वाविशेषात् । यच्च यदर्थं कल्पितं तस्य तेनैव विफलीकरणे सर्वत्रादृष्टमुपादाय दृष्टवैफल्यप्रसङ्गः । तथाच तदपि न स्यात् प्रमाणाभावात् दृष्टे नष्टादृष्टमुन्नीयते परार्थं च प्रवृत्तिः स्वार्थाभावात् । न च दुःखसृष्ट्या कारुण्यापवादः अवकाध्यापकचिकित्सकादिषु व्यभिचारात् । अथ

दौर्ब्बल्यादेव किं नैवमिति चेन्न दोषाभावात् तदभावश्च लोभाभावात्
तदभावोऽपि सर्व्वज्ञत्वादिति । एकद्व्यणुककारी तु परमाणुमहत्त्वमुप-
कार्य्यत्र्यणुकादिभोगपर्य्यन्तं द्रव्यादिपदार्थषट्कञ्च जानाति नून-
मित्यविवादम् एषामुपादानादिरूपत्वात् अवच्छेद्यावच्छेदकभावापरि-
ज्ञाने चोपादानादिपरिज्ञानानुपपत्तेः । यश्च यज्जातीयमेकं कर्त्तुं
ज्ञातुं वा समर्थः स तज्जातीयं सर्व्वमेवेति नियमः । सामर्थ्यस्य जाति
नियतत्वात् केवलं समर्थोऽपि सहकार्य्यसन्निधेर्न कुर्य्यात् न जानीयात्
तच्च प्रथममित्यसदेव कार्य्यस्य देशकालनियमोपलम्भात् । द्वितीयन्तु
सम्भवेदपि यदि कार्य्यमस्य ज्ञानं स्यात् । नच तत्तथा कथमिति
चेत् शरीरापाये तदाश्रितानामिन्द्रियादीनामपायात् । नचान्वय
व्यतिरेकसिद्धहेतुभावस्याभावेऽपि हेत्वन्तरात् कार्य्यजन्म निर्हेतुकत्व
प्रसङ्गात् । नचाहेतुकं कार्य्यं नाम ततः स्वतः सिद्धैवास्य ज्ञान चि-
कीर्षाप्रयत्नशक्तिर्यद्वा चिरा तज्जातीयसमस्तगोचरेति सर्व्वज्ञसिद्धिः ।
शरीरापाय एव कथमिति चेत् दृश्यस्य प्रत्यक्षबाधितत्वात् अदृश्य
स्यापि सावयवतया मूर्त्ततया च निबिडतरपाषाणमध्यवर्त्तिनि भेक
शरीरादौ कार्य्ये कर्त्तव्ये आश्रयस्य प्रवेशः । नच परमाणुरूपं तच्छ-
रीरम् अनन्तराणुत्वे निर्व्वयवस्य तथेन्द्रियाश्रयत्वानुपपत्तेः नच वह्नि
र्व्वचिमतो ज्ञानजननोपयोगि शरीरवैयर्थ्यप्रसङ्गात् । नच दविष्ठ
एव सूर्य्यादि वत् कुर्य्यादिति साम्प्रतं कारकानधिष्ठानात् शरीरस्य
तदायतनतया प्रयत्नस्याव्यापकत्वात् । तथापि च व्यापकत्वे वा सम-
वायिकारणानुरोधेनाकारकत्वतया तदेव नित्यत्वम् । नचोद्देशमात्र
सम्बन्धेन क्रियाहेतुत्वम् अस्मदादिप्रयत्नस्यापि तथाभावप्रसङ्गात् ।
नच संयुक्तसंयोगादधिष्ठानं साक्षादधिष्ठानस्य विवक्षितत्वात् ।
विषापनोदादौ कथमिति चेन्न अस्मदादेर्ज्ञानमात्रं प्रति यत्नस्या
विरोधात् विषापनोदादौ तु तत्सम्बन्धादिमत्कर्मजन्यादृष्टसहकारिणो
वाऽन्यस्यैव तथ्यो यत्नः क्रियाहेतुरिति । सर्गादौ तु न शरीरसम्बन्धा-

सिद्धविशेषणो हेतुः । अथ बहुत्वं तदा सुगताद्यागमैरनैकान्तः तेषामपि वा सर्व्वज्ञपूर्व्वकत्वमिति चेन्न बहुतातिशयस्य विवक्षितत्वात् कोऽतिशयः सर्व्वदर्शनान्तःपातित्वं [illegible] परिग्रहः यथानुष्ठानं स्वीकृतव्यवहारव्याकरणादिपाणिनीयत्वं स्वीकृतप्रामाण्यायुर्वेद स्वीकृतार्थत्वञ्च । तथाहि नास्त्येव तद्दर्शनं यत्र संहतमेतदित्युक्तापि गर्भाधानाद्यन्त्येष्टिपर्य्यन्तां वैदिकीं क्रियां जनो नानुतिष्ठति स्पृश्यास्पृश्यादिविभागं वा जनो नानुमनुते व्यतिक्रमे वा चमनस्नानादि प्रायश्चित्तं नानुतिष्ठति । न सर्व्वत्र सर्व्वैर्जनैरेवमिति चेत् माभूत् नहि सर्व्वत्र सर्व्वैर्योगिभिरायुर्वेदार्थो नानुष्ठीयतइति न तस्य महाजनपरिग्रहः अपि तु सर्व्वदर्शनान्तःपातिभिरित्येव । तथापि न सर्व्वो वेदार्थएवमिति चेत् माभूत् नहि सर्व्वो वैद्यकार्थएव मपितु कश्चिदपि केनापि एवन्तर्हि सौगताद्यागमार्थोपि कश्चिदहिंसादिः सर्व्वदर्शनान्तःपातिभिरनुष्ठीयतएव कैश्चिदिति सोऽपि महाजनपरिगृहीतः स्यात् । न सन्देहात् किमहिंसादिर्वैदिकएवार्थो विडालव्रतन्यायेन श्रद्धापादनाय शौद्धोदनिप्रभृतिभिरुपनिबद्धः आहोस्वित् स्वयं प्रदृष्टएवेति । न तावत् स्वयं दृष्टएवेति अभयकाद्यागमसाधारणत्वात् यस्तु साधारणो मण्डलीकरणादिः केशोल्लुञ्चनादिर्वा नासौ सर्व्वैरनुष्ठीयते वैदिकस्त्वसाधारणएव निषेकादिस्तथेति । अपि च वाचकापभ्रंशविभागोऽस्ति वस्तुतोनवा तद्व्यवहारस्तावत् सर्व्वैरेव तीर्थिकैरायेणानेन स्वीकृतः तथा शिक्षाज्योतिश्छन्दोनिगमनिरुक्तादयश्च तेषां वेदरक्षैव परमं प्रयोजनमिति ।

स्यादेतत् व्याकरणादीनि तावत् सर्व्वैरेवाभ्युपेतार्थानि वेदा अपि तैः पालनीया भवन्तु तएवेति तु कुतः संसारमोचकागमोपि तत्पालनीयः किन्न स्यादिति चेन्न तत्कर्तृभिस्तथानभ्युपगमात् अव्युत्पादनात् असाधारणलिङ्गाभावात् विरुद्धलिङ्गसद्भावाच्च । नहि वेदशब्दार्थाविव सुगताद्यागमासाधारणशब्दार्थावनुरोध्य तेषां प्रवृत्तिः

यतएवमनुष्ठीयते प्रत्युत विरोधएव तेषां तदप्रामाण्यमुत्पादनात् तस्मात् सर्वाभ्युपेतव्यवहारव्याकरणादिपालनीयत्वमपि वेदानामेव नान्येषां सर्वाभ्युपेतप्रामाण्यैर्मन्वादिभिः स्वीकृतत्वेषामर्थः प्रतिपदं तदीय प्रान्तिकपौष्टिकप्रायश्चित्ततपोजप्यदानहोमाभ्युपदेशात् नचैवमागम सत्त्वाप्रमाणमेव तुल्ययोगक्षेमत्वात् । एतदेवासिद्धं प्रक्षेपस्यापि सम्भवादिति चेन्न अध्येत्रध्यापयितृसम्प्रदायाविच्छेदात् अन्यथा-करणे चास्य बहुभ्यःस्यान्निवारणमिति न्यायात् । तस्मादेवंरूपोपि महाजनपरिग्रहोवेदानामेवेति सोऽयमीदृशो महाजनपरिग्रहो वेदस्यासर्वज्ञपूर्वकत्वेऽसम्भवन् सर्वज्ञपूर्वकत्वेन व्याप्यते । यथाहि पूर्वविरुद्धापूर्वव्याकरणवैद्यकादिषु विगानादपरिग्रहस्तथा तथाविधे धर्म्मशास्त्रेपि व्यामोहात्कुर्वन्नपि कश्चिदेव नतु सर्वेषाम् । अथ पूर्वाविरुद्धन्तत्तथापि पूर्वस्य पूर्ववदपरिग्रहे केनचित् परिग्रहे वा कथं तन्मूलस्यान्यस्य सर्वैः परिग्रहः । नच नासीदेव पूर्वं धर्म्म शास्त्रं नानान्तरस्यापि वस्तुनि कुशलतयानुष्ठानाभावस्य प्रसङ्गात् । तथाच धर्म्माभावे तु तत्कार्य्यस्य सुखस्याप्यभावे रागानुत्पत्तौ लोक समीहोच्छेदे लोकोच्छेदप्रसङ्गः ।

तस्मान्महाजनपरिगृहीतपूर्वपूर्वागमपूर्वकत्वाद्वा प्रवाहनित्यत्वाद्वा प्रलयविच्छेदे सर्गादौ सर्वानुविधेयपुरुषधौरेयपूर्वकत्वाद्वा महाजनपरिग्रहः । ननु पूर्वागमानपेक्षार्वाचीनपुरुषप्रणयनपूर्वकत्वात् पूर्वागमप्रामाण्याप्रामाण्ययोरुभयथापि तस्य विप्रलम्भकत्वात् प्रामाण्ये हि तद्विरुद्धाभिधानं विप्रलम्भएव अप्रामाण्येप्युपायमविदुषोऽननुष्ठाने तदाभासानुष्ठाने वा असर्वज्ञोपदेशोविप्रलम्भएवेति । तन्न न प्रथमः वेदपरम्परानुपलम्भात् अर्वाचीनानां पाठपारतन्त्र्यप्रमाणेन प्रवाहोपपत्तौ तत्कल्पनायां प्रमाणाभावात् । नापि च द्वितीयः वेदह्रासदर्शनात् यत इदानीमश्रूयमाणस्यापि वेदस्यानुष्ठीयतेऽर्थः निबध्यते च मन्वादिभिः पुरुषाणामपचीयमानशक्तित्वाच्च यथा

अश्वमेधराजसूयाद्यनुष्ठानशक्तेरुपचयवत्तदध्ययनशक्तेरपि। नच पूर्व्व-मपि नानुष्ठिता एव राजसूयादयः तदर्थस्य वेदभागस्य वैयर्थ्यप्रसङ्गात्। नच नित्यानुमेयवेदसम्भवः वर्णानां नित्यत्वेऽप्यानुपूर्व्याः पाठाधीनत्वात्। नचानुपूर्वीशून्या वर्णाः पदं नाम नचाकाङ्क्षाद्युपेत पदकदम्बकादन्यद्वाक्यं नामेति गुरुरपि लघुरेव। तस्मात् पुरुषाणामनुष्ठानशक्तिवदध्ययनशक्तिरपि युगक्रमेणापचीयते ततो वेदानां शाखोच्छेदः तदर्थानामनुष्ठानोच्छेदः वर्णाश्रमाचारव्यवस्थाविप्लवश्चेति।

अतएव भगवतो व्यासस्य पुरुषशक्त्यपचयमवेक्ष्य वचनानि स्वल्पायुषः स्वल्पसत्वा इत्यादीनि वेदोत्सादमवेक्ष्य प्रतिमन्वन्तरञ्चैव श्रुतिरन्या विधीयते इत्यादीनि अनुष्ठानोत्सादमवेक्ष्य दानमेकं कलौ युग इत्यादीनि आचारविप्लवमवेक्ष्य प्रजास्तत्र भविष्यन्ति शिश्नोदरपरायणा इत्यादीनि। तथा च श्रूयमाणा अपि वेदावयवा उत्सादमुपयास्यन्ति वेदत्वात् वाक्यत्वाद्वा उत्सन्नशाखावदिति न्यायः यथा चैतत् तथा पर्वता अपि चूर्णीभविष्यन्ति पार्थिवत्वात् घटवत्, समुद्रा अपि शोषमुपयास्यन्ति जलाशयत्वात् स्वल्पपल्वलवत् सूर्योऽपि निर्वास्यति तेजस्त्वात् दीपकवत् ब्रह्मापि मेष्यति शरीरित्वात् अस्मदादिवत् इत्याद्यागमाविरोधिनानुमीयताम्। स्यादेतत् भविष्यदुच्छेदोऽनुमितः सतु भूतोऽपीति कुत इति चेत् अतएव यत उत्सादानन्तरं पुनः सर्गेण भाव्यम्। अन्यथा संसारिणां कृतहानप्रसङ्गः। नहि विश्वनिर्माणामन्तरेण भोगज्ञानयोः सम्भवः। न च तेन विना कर्म्मप्रवाहसंरोधः। ततो यथा भविष्यन् विश्वसर्गोच्छेदः पूर्व्वं कृतस्तथायमपीति। समयनियमस्तु प्राणिनां कर्म्मवैधर्म्येऽपि वर्षादिनियमवदुदयास्तमयनियमवद्वा द्रष्टव्यः कर्म्मणामेवैवंस्वभावत्वात्। एतदर्थमेव हि पुराणेषु सृष्टिप्रलययोर्दिवसरात्रिव्यवहारः। तथापि सर्वप्राणिनामयौगपद्ये किं प्रमाणमिति चेत् दिक्स्तम्भभुवनप्रासादभङ्गेऽपि निर्भया एव ग्रामकुटीघट्टविहारिणः शरीरिण इति महती प्रत्याशा।

तस्मात् सर्गादिमहाजनमन्वादिपरिग्रहपूर्वकोऽयमर्थ यावदनुवर्त्तं तइति नानवसरस्तोमावकाशोपीति युक्तमुत्पश्यामः । तदेव कथं मन्वादिभिः परिगृहीता वेदाइति चेत् आयुर्वेदवदाप्तोक्तत्वनिश्चयात् । तदेव कुतइति चेत् अध्यक्षतः तेषामप्यतीन्द्रियार्थदर्शित्वात् । तादृशानेवां तत्परिग्रहेण किं प्रयोजनमिति चेत् असद्व्यवहारेणास्मदपत्यानि व्युत्पद्यन्ताम् । तथा च धर्म्मसम्प्रदायः प्रवर्त्ततामिति भूतदया स्वाधिकारसम्पादनञ्च । अथवा सर्गान्तरगृहीतव्याप्तिप्रादुर्भावे सुप्तप्रतिबुद्धवत् चिरत्वेनाविप्रलम्भकत्वमुखावयभूतनिर्म्माणादर्शनेन सार्वज्ञमनुमायाप्तत्वनिश्चयस्तेषाम् तस्य । यदा भगवानेव सम्प्रदायप्रवर्त्तनाय तनुमयः कायसहस्राणि व्युत्पाद्य व्युत्पादकभावव्यवस्थितानि निर्म्माय तदातनं महाजनं परिग्राहितवान् नटनोपाध्यायवत् स्वयं नटितेति सर्वं सुस्थम् । एतच्चयेपि भाग पुराणादिसङ्कथाप्यस्तीति । स्यादेतत् परमेश्वरप्रवर्त्तितोप्ययमेवं वेदसम्प्रदायः सर्गान्तरवेदापेक्षरचितेति सेश्वरमीमांसापक्षः कपिलपक्षोपि स्यादिति चेत् किमर्थं पुनरियमपेक्षा पूर्ववेदे जगन्नाथस्य नतावद्वेदार्थोपलम्भाय नित्यसर्वज्ञत्वात् । नापि वचनार्थं स्वभावतः सर्वकर्त्तृतया तदपेक्षानपेक्षणात् । नापि विरोधपरिहारार्थं प्रतिपाद्यानां तदनुसन्धानविधुरत्वात् अवैधुर्य्ये वा कर्त्तुः सार्वज्ञविज्ञानादेव समस्तविरोधविधूननात् । तथापि पूर्वसर्गान्तरादेव व्यवहारोपि परमेश्वरस्य गोचरइति चेत् कः सन्देहः यदियेतदेव वेदस्य प्रवाहनित्यत्वं न केवलं तस्य किन्तु घटादेरपीति न्यायस्य दर्शनमन्यथा मीमांसेवेति का सेश्वरमीमांसेति । तस्मादुक्तरूपः परिग्रहो नान्यथा सम्भवतीति प्रतिबन्धसिद्धिः । तथाचाप्तोक्तत्वात् प्रामाण्यमिति । कथं पुनः सुगताद्यागमेषु अनादरश्छान्दसानां वेदविद्धेलिदर्शनान्तःपातिपुरुषप्रणीतत्वादिति नाशङ्कनीयः जिनेन्द्रभगवदिन्द्रप्रभृतिप्रणीतत्वप्यादरात् तत् कस्य हेतोः महाजनपरिगृहीतपूर्वागमाविरुद्धतया तदनु-

साहित्यात् कुतस्तर्हि सिद्धप्रामाण्यवेदविरोधात्। कथन्तर्हि यति-पक्षेऽपि तत्परिग्रहः आयासभीरुभिर्दुःखमयगार्हस्थ्यकर्मविद्वेषात् उत्तरगर्भीयतन्तुवायवत्। नत्वेवं वेदे कर्मण्येव निर्भरत्वात् वैद-गिंकवद्भिः शक्तैरनधिकारिभिरनन्यगतिकत्वात् कीर्त्तिप्रज्ञाकरवत्। नत्वेवं श्रुतौ परैः पूज्यमानानामप्यप्रवेशात् इतः पतितानामपि परै-रुपादानात् भण्डपेथादैतस्करैश्च ग्रहणात् सद्धर्मादिवत्। नत्वेवं आम्नाये तद्विभागव्यवस्थापकत्वात् कुतर्काभ्यासिभिश्च मोहात् कापा-चार्यादिवत्। नत्वेवं त्रय्यामपि आचरणभावं प्रकृतेः अविवेकिभिश्च पाषण्डसंसर्गात् घोटिकमुखादिवत्। नत्वेवं प्रकृते पित्रादिक्रमेण प्रवर्त्तनात् योगाभ्यासाभिमानिभिरव्ययताभिसन्धैः सुभूत्यादिवत्। नत्वेवं प्रस्तुते प्रथमतः कर्म्मकाण्डस्य नियोगात् अयोग्यैरुपजीवनात् सामान्यश्रमणकवत्। नत्वेवं प्रकृते योगन्तु ज्ञानानधिकारात् कुहकवञ्चितैः समीचीनप्रत्ययात् दीपङ्करदर्शिवासिष्ठवत्। नत्वेवं प्रकृते तदभावात् किन्तु महाजनपरिग्रहादस्य प्रामाण्यमनुमाय आयुर्वेदे मैत्र्यकालवदिति।

किं पुनरमीषां मूलं नह्येतावन्तो ग्रन्थराशयः परविप्रलम्भार्थं प्रणीयन्ते। नच विश्वमेव विप्रलभ्यमिति चेत् भवतु किञ्चिन्मूलं किमनेन चिन्तितेन अतिनिर्बन्धे तु क्षणिकनैरात्म्यादिप्रतिपाद-कानां तर्काभासः प्रतिपादितश्च तथा शून्यसाकारादिप्रतिपादकानां तु दुरभ्यासः योगशास्त्रेष्वभ्यस्यतः स्वरूपशून्यात्मैव भाव्यमेवेति प्रतिपादनात्। चैत्यचीवरादिप्रतिपादकानान्तु स्वस्थितिभङ्गिमन्याय दर्शनान्तरस्थितिविद्वेषः स्वस्थितौ प्रमाणमनपेक्ष्य परस्थितौ विधानात् ब्रह्मचर्य्यादिप्रतिपादकानान्तु वेदादेव न्यायाविरुद्धं परतन्त्रोक्तमप्य-नेनाप्यप्रसिद्धेर्ग्रहणमिति विमर्शात्। मन्त्रकोशप्रतिपादकानान्तु प्रभाव-वीक्षणात् सर्वसाधारणः। अद्वैतदेवतानामाकुस्त्वधिकः श्रद्धा परिगृहीतत्वाकारादेवतेति च क्षणसमालोचः सत्यतपश्शालिनां वचनं

मन्वः विषयवत्यां चिन्तायां चिरस्मोर्च्यं प्रयोजनं कथमन्यथा मह-
र्षीणां शापानुग्रहक्षमता कथं वा चतुर्भुजाष्टभुजादिव्यवस्थितिः
दुरूहादिति एकविप्रलम्भार्थं वा केनचित् कियदेव प्रणीतम्। तेन
अनुष्ठितमपरैस्तदनुयायिभिर्गृहीतमनुष्ठितं व्याख्यातं विवर्द्धितञ्चेति
किमनुपपन्नम्। तस्माद्विरुद्धागमव्युदासेन वेदारवार्वाचीनपुरुष
पूर्वकत्वशङ्काव्युदासेन परमेश्वरप्रणीतत्वादेव भूतार्थभागस्याप्रामाण्य
शङ्काव्युदासेन प्रमाणमेवेति नियमः। कथञ्चरमिति चेत् महा-
जनपरिग्रहस्य तत्प्राच्यस्य वा सर्वज्ञपूर्वकत्वस्य पुरुषदोषाभावस्य
वा प्रामाण्यहेतोर्भूतभव्यार्थभागयोः साधारणत्वात्। किं तस्य फल
मिति चेत् स्वार्थप्रतिपादनं किं तेन प्रयोजनं यथायथमुपादानं हानं
मोक्षश्च सकलानर्थहेतूनां तत्त्वज्ञानाद्धानम् अर्थहेतूनामुपादानम्
आत्मनो मोक्षश्चेति।

कः पुनरयं मोक्षः आत्यन्तिकी दुःखनिवृत्तिरात्मनः किमात्य-
न्तिकत्वं सजातीयात्यन्ताभावविशिष्टत्वं कथं कारणमात्रोच्छेदात्।
अपुरुषार्थोऽयमिति चेत् असत्यस्याकाम्यस्याश्रवस्य दुरन्तस्य च
तथाभावात्। नन्वयं तथा सत्योऽप्ययं प्रमाणसिद्धत्वात् सर्वैरभ्युप-
गमाच्च काम्यश्च दुःखस्य स्वभावद्वेष्यत्वात्। सुखार्थन्तद्धानमिति चेन्न
अतद्धेतुत्वात् व्याप्तेरिति चेन्न असिद्धेः। नहि दुःखाभावः सुखेन
व्याप्यतइति सुखं तावत्तेन व्याप्यतइति चेत् तर्हि सुखे सत्यवश्यं दुःखा
भावो भवेदिति सुखप्रार्थनेऽपि विपरीतापत्तिः नावेद्यत्वादसौ काम्यत
इति चेन्न दुःखार्त्तानां तदभाववेदनमनभिसन्धायैव तज्जिहासादर्श-
नात् कथमन्यथा देहमपि जह्युः। अविवेकिनस्ते इति चेत् किमत्र
विवेकेन इष्टमात्रतामात्रानुबन्धित्वात् पुरुषार्थस्य गम्यागम्ययोः
काम्यत्ववत्। बहुतरानर्थप्रसक्तिशङ्कया तु शास्त्रमनुकूलयन्तस्ते
इतरेभ्योऽभिद्यन्ते। अपि चैवं कण्टकादिजन्यदुःखनिवृत्तिरपि पुरु-
षार्थो न स्यात् अवेद्यत्वात् प्रथमं विद्यते असाविति चेत् तुल्यं

मोक्षेऽपि नाध्यक्षेणेति चेत् तर्हि दुरितक्षयकामस्य कर्म्मानुष्ठा-
नानर्थक्यप्रसङ्गः तदभावतत्फलाभावयोरनध्यक्षत्वात् । उपलब्धि
योग्यतापन्नानिष्टनिवृत्तिरूपत्वाददयमदोष इति चेत् तुल्यं दुःखवत्सुख-
स्याप्युच्छेदादकाम्योऽयमिति चेन्न तृष्णया दोषतिरस्कारेण प्रवृत्ति
वदलम्प्रत्ययेन गुणतिरस्कारान्निवृत्तेरपि दर्शनात् मधुविषसंपृक्त
मन्नमत्रोदाहरणम् । सन्ति केचनालम्प्रत्ययवन्तः न च समये दुःख
स्यैव प्राचुर्य्यात् दुःखे सुखहेत्वनुषङ्गेऽपि सुखे दुःखहेत्वनुषङ्गनिय-
माच्च । तथाहि न्यायोपार्ज्जितेष्वेव विषयेषु कियती सुखखद्योतिका
कियन्ति वार्ज्जनरक्षणादिदुःखदुर्द्दिनानि । अन्यायोपार्ज्जितेषु तु
यद्भविष्यति तन्मनसापि चिन्तयितुमशक्यं विदाङ्कुर्वन्तु सन्तः । यदि
कण्टकादिजन्येषु दुःखेषु लेशतोपि सुखानुषङ्गः । अस्ति तु स्वर्गादि
सुखेष्वपि बहुलो दुःखग्रन्थिसम्भेदः अतएव विविच्य भुञ्जतां तुष-
तण्डुलवदित्यशक्यमिति । अशक्यश्चायं निर्वर्त्यत्वात् अनन्तत्वापरावृत्तेः
अनर्थवासनानुकूलाभिसन्धित्वाच्चेति । नित्यन्तु सुखं न सत्त्वं
योग्यानुपलम्भबाधितत्वात् ।

श्रुतिस्तत्र प्रमाणमिति चेन्न योग्यानुपलम्भबाधिते तदनवकाशात्
अवकाशे वा ग्रावप्लवनश्रुतेरपि तथाभावप्रसङ्गात् । नापि काम्यं
सदा सत्त्वात् नहि यद्यस्यास्ति स तत् कामयते भ्रान्तेरेवं कण्ठचामी-
करवदिति चेन्न असम्भवे तदभावात् । नापि शक्यं नहि तन्निर्वर्त्यं
नित्यत्वात् नापि विकार्य्यम् अपरिणामित्वात् । न संस्कार्य्यम्
अनाधेयातिशयत्वात् न प्राप्यं नित्यसम्बन्धत्वात् न ज्ञेयं ज्ञानस्यापि
नित्यत्वात् अनित्यत्वे वा शरीरादिकारणापाये तदनुत्पत्तेः उत्पत्तौ
वा तेषामकारणत्वप्रसङ्गात् । तथाच सर्वः सर्वदर्शी स्यात् आत्म-
मनःसंयोगादेः सर्वत्राविशेषात् ज्ञानज्ञेययोर्नित्यत्वेपि तत्सम्बन्धो
जन्यते । सच षट्पदार्थव्यतिरेकादुत्पन्नोपि निवर्त्तते प्रध्वंसवदिति
चेत् भावाभावयोः प्रकारान्तराभावात् । तत्र च नाभावः प्रतियोग्य-

नुपपत्तेः भावत्वेऽवश्यमुत्पन्नो निवर्त्तेत उपाध्यन्तराभावात्। अविद्या विध्वंसनमेव तत्प्राप्तिरिति चेत् अत्र न नो विवादः। नह्यो कर्विघ्नति विषदुःखव्यतिरिक्ता अविद्या नाम तद्विध्वंसनञ्च पुरुषार्थइति प्रतिपादनादिति दुरन्तञ्च तत् तदभिसन्धेः सुखसंस्कारसहकारितया तदुद्भवे विशिष्टसुखाभिलाषिणो वैषयिकेऽपि प्रवृत्तिसम्भवात्। क्षणाभिमत्तकामिन्या दृष्टा तिष्ठ तु कामितेत्युदाहरणात्।

स्यादेतत् आत्मा तु किं स्वप्रकाशसुखस्वभावोऽन्यथा वेति पृच्छामः आढ्योऽसि चेत् उपनिषदं पृच्छ मध्यस्थोऽसि चेत् अनुभवं पृच्छ नैयायिकोऽसि चेत् न नैयायिकसुखज्ञानातिरिक्तस्वभावइति निश्चिनुयाः। तदतिरिक्ते तु सुखज्ञानव्यवहारवीजाभावात् तद्व्यवहाराभावः अनुग्रहाभिव्यक्तेन्द्रियप्रसादादिलक्षणकार्य्यं हि तद्व्यवहार वीजम्। अर्थं प्रवणत्वस्मृतिसंस्कारादिकार्य्यञ्च ज्ञानव्यवहारवीजं लोके तयोश्चाभाव आत्मनीति। तस्मात्

श्रुतेः श्रुत्वात्मानं तदनु समनुक्रान्तवपुषो
विनिश्चित्य न्यायादथ विहितहेयव्यतिकरम्।
उपासीत श्रुत्या शमदमविरामैकविभवो
भवोच्छित्त्यै चित्तप्रणिधिविहितैर्योगविधिभिः॥

उपास्यमाने तस्मिन् प्रथमं वहिरर्थएव भासते यमाश्रित्य धर्म्म मीमांसोपसंहारः चार्वाकसमुत्थानञ्च तत्प्रतिपादनार्थं पराञ्चिखानि इत्यादि। तद्धानार्थं परं कर्म्मण्यइत्यादि। अथार्थाकारः यमाश्रित्य वैदिकमतोपसंहारः योगाचारसमुत्थानञ्च तत्प्रतिपादनार्थमात्मैवेदं सर्व्वमित्यादि। तद्धानार्थमगन्धमरसमित्यादि। अथार्थाभावः यमाश्रित्य वेदान्तदारुमात्रोपसंहारः शून्यत्वनैरात्म्यसमुत्थानञ्च तत् प्रतिपादनार्थमसदेवेदमग्रआसीदित्यादि। तद्धानाय अन्धन्तमः प्रविशन्ति ये केचात्महनोजनाइत्यादि। ततोविवेकः यमाश्रित्य सांख्य मतोपसंहारः प्रकृतिसत्वसमुत्थानञ्च। तत्प्रतिपादनार्थञ्च प्रकृतेः परः

श्चादित्यादि तद्धानाय नान्यत् सदित्यादि। ततः केवल आत्मा प्रकाशते यमाश्रित्याद्वैतमतोपसंहारः तत्प्रतिपादनार्थं न पश्यतीत्याद्येकी भवतीत्यादि। तद्धानार्थं नाद्वैतं नापि च द्वैतमित्यादि। ततः समस्तसंस्काराभिभवात् केवलोपि न विकल्प्यते यमाश्रित्य परमवेदान्तोपसंहारः तत्प्रतिपादनार्थं यतोवाचोनिवर्त्तन्ते अप्राप्य मनसा सहेत्यादि। सा चावस्था न हेया मोक्षनगरगोपुरायमाणत्वात्। निर्वाणन्तु तस्याः स्वयमेव यदाश्रित्य न्यायदर्शनोपसंहारः तत्प्रतिपादनार्थम्। अथ यो निष्काम आत्मकाम आप्तकामः स ब्रह्मैव सन् ब्रह्माप्येति न तस्य प्राणा उत्क्रामन्ति तत्रैव समवलीयन्तइत्यादि तस्मादभ्यासकालेऽप्यपद्वाराणि विहाय गुरुद्वारं प्रविशेत् यतो मार्गविमार्गसंसर्गसङ्कोचमात्राशङ्कानिरस्यते लघ्वेवा धनुषा योगइति।

बहुतरपरतन्त्रप्रान्तरभ्रान्तभीत
स्तिमितपथिकरक्षासार्थवाहेन यत्नात्।
इदमुदयकरेण न्यायलोकागमानाम्
व्यतिकृतिमवधूय व्यञ्जितं वर्त्म मुक्तेः॥
नास्य श्लाघामकलितगुणः पोषयन् प्रीतये नः
कोऽन्यैः स्विष्टस्तुतिशतविधौ शिल्पिनः स्यात् प्रकर्षः।
निन्दामेव प्रथयतु जनः किन्तु दोषान्निरूप्य
प्रेक्षावांस्तस्य स्खलितवचनं प्रीणयेदेव भूयः॥

इति श्रीमदुदयनाचार्य्यकृत आत्मतत्त्वविवेकः

समाप्तः।